कर्माणि येभ्यएवपिता दद्यात्तानेवोद्दिश्यपार्वणमित्यादिवचनेषु यत्तच्छन्दनिर्देशा त्पितृभ्यएवदद्यान्नस्वपितृभ्य इतितदयुक्तं स्व-पितृभ्यःपितादद्यात्सुत संस्कारकर्मस्विति कात्यायनेन प्रादुर्भावे पुत्रजन्मनो ग्रहणे चन्द्रसूर्ययोः स्नात्वानन्तरमात्मीया न्पितॄन्श्राद्धेन तर्पयेदिति कार्ष्णाजिनिनाच स्वपितृभ्यएवश्राद्धविधानात् नच-मातृमातामहादिकं परित्यज्य पितृसंबन्धिभ्योदातुमुचितं अतश्च-स्वपितृभ्यएवेतिसूत्रम् ॥

**मू० नान्दीमुखान्पितॄन्वाचयिष्यऽइति पृच्छतिवाच्यतामित्यनुज्ञातो नान्दीमुखाः पितरःपितामहाः प्रपितामहाः नान्दीमु-खा मातामहाः प्रमातामहा वृद्धप्रमाताम-हाश्च प्रीयन्तामिति ॥ ६ ॥**

अत्रप्रथमोद्दिष्ट नान्दीमुखशब्देन वृद्धप्रपितामहादित्रिक-स्यैव नान्दीमुखत्वंमाभूदित्य श्रुमुखानामपि तत्प्राप्त्यर्थं पुनर्ना-न्दीमुखग्रहणं एवंमातामहेष्वपि अतएवमन्त्रे पितरःपितामहाइति बहुत्वमुक्तं चकारोमातृवर्ग प्राप्त्यर्थं तथाचब्रह्मपुराणे मातामहे-भ्यस्तथानांदीवक्त्रेभ्यएवच अथनांदीमुखीभ्यश्च मातृभ्यःश्राद्धमुत्त ममिति । ननुत्वाभ्युदयिके मातृश्राद्धस्यपूर्वंभावित्वा त्पितृग्रहणं-किमर्थं उच्यते अग्निहोत्रंजुहोति यवागूंपचती तिवत्पाठोर्थेनबा-ध्यतइत्यदोषः तथाचशाट्यायनः नांदीमुखीभ्यइत्यादि मातृश्राद्धन्तु पूर्वंस्या त्पितॄणान्तदनन्तरम् ततोमातामहानाञ्च वृद्धौश्राद्धत्रयंस्मृत मित्यादिच अतश्चनांदीमुख्योमातरः प्रीयन्तामित्यादिक्रमेणयथा-

लिङ्गम्प्रयोगः यदेतत्संदिह्यते किमत्र नवदैवत्यं श्राद्धमुत द्वादशदैवत्यमिति उभयथावचनदर्शनात् तथाहि मातृभ्यः प्रथमन्दद्यात्पितृभ्यस्तदनन्तरं ततोमातामहानाञ्च वृद्धौश्राद्धत्रयं स्मृतमित्यादि चतुर्विंशतिमतेतुमातृपूर्वान्पितॄन्पूज्य ततोमातामहीस्तथा मातामहंस्ततः केचिदेवंयुग्मांस्तुभोजयेत् पुराणसमुच्चयेपि शस्तंनांदीमुखंश्राद्धम्पिण्डैर्द्वादशभिःसदातथापि दधिदूर्वाक्षतयवैर्बदरैर्णाविमिश्रितैःपिण्डा नांदीमुखे देयामातृपूर्वांश्चद्वादशेति एवंविप्रतिपत्तौ यथाशाखंयथाकुलन्देशंवाव्यवस्थेत्यविरोधः तुल्यविकल्पोवा अथवाधनधान्यपुत्रपश्वादि वृध्यर्थंक्रियमाणम्वृद्धिश्राद्धं अग्न्याधानाद्यभ्युदयनिमित्तमाभ्युदयिकमितिभेदः। तत्र वृद्धिश्राद्धन्द्वादशदैवत्यं आभ्युदयिकं नवदैवत्य मितिव्यवस्थेति अन्वष्टकायांयच्छ्राद्धं यच्छ्राद्धम्वृद्धिहेतुकं पित्रादीनांपृथग्दानं स्त्रीणांपिण्डः पृथक्पृथगिति अत्रवृद्धिहेतुकमित्यभिधानात् तथा शरीरोपचयेश्राद्ध मर्थोपचयएवच पुष्ट्यर्थमितिविज्ञेय मौपचारिकमुच्यते तथा नक्षत्रग्रहपीडासु दुष्टस्वप्नावलोकने इच्छाश्राद्धानिकुर्वीत नवसस्यागमेतथेतिवचनादिति॥

## मू० नस्वधाम्प्रयुञ्जीत॥ १०॥

निषेधांतरोपलक्षणञ्चैतत् तेनशर्मादिकमप्यत्र नप्रयुंजीतेत्यर्थः तथाचपुराणसमुच्चये नस्वधाशर्मवर्मेति पितृनामनचोच्चरेत् नकर्मपितृतीर्थेन नकुशाद्विगुणीकृताः नतिलैर्नापसव्येन पित्र्यमन्त्रविवर्जितं अस्मच्छव्दंनकुर्वीत श्राद्धे नान्दीमुखेक्वचिदिति अतश्च नांदीमुखपितरमुकगोत्रेत्यादिप्रयोगः। अन्येतुपार्वणवन्नामशर्मादिक मपिप्रयुंजते तन्निषेधदर्शनात्कथमितिचिंत्यं पार्वणवदित्यतिदेशाद्यातद्विधिः अत्रकश्चिदाह प्रकृतेस्वधावाचनेस्वधांन-

कर्मसुपिण्डानोद्वाहनात्तेषान्तस्या भावेतुतत्क्रमादिति अस्यार्थः पिण्डशब्दःश्राद्धं लक्षयति आउद्वाहनादितप्राङ्भिविधीततश्च-पुत्रस्यनिषेकादिप्रथमविवाहपर्यंतेषु संस्कारकर्मसुपिता स्वमातृ-स्वपितृस्वमातामहेभ्यः श्राद्धं दद्यात् नपुत्रमातृमतामहादिभ्यः तस्यपितुरभावेतेषाम्पि तुर्मात्रादीनामेवनवानां तत्क्रमादेरनक्र-मेणपित्रादीनान्तेनैव क्रमेणाधिकारीज्येष्ठभ्रात्रादिरपिदद्यादिति नन्वेवंसतिसंस्कार्यस्य पुत्रादेर्मृतपित्रोः श्राद्धादौमुख्याधिकारित्वा त्तदतिक्रमोनायुक्तइति नचजीवत्पित्रोर्ह्यनुष्ठानक्रमः समृतपित्रो-रप्युचितत्वादितिवाच्यं प्रेतेभ्योदद्यादित्यादिवचनैः प्रत्तानामवश्य-देयत्वात् तस्मात्तेषान्तस्याभावेतुतत्क्रमादित्यस्यतत्क्रमात्तदुपक्रमा न्मृतपित्रादिमारभ्यैवश्राद्धम् भ्रातादिरप्यधिकारीकुर्यादित्यर्थः तस्याभावेसुतः क्रमादितिपाठेपितदर्थस्यप्रतीयमानत्वाच्चेति । अत्रोच्यते असंस्कृतातुसंस्कार्याभ्रातृभिः पूर्वसंस्कृतैरित्यादिनाभ्रा-त्रादयः पित्रभावेप्रतिनिधित्वेना विधीयन्तेप्रतिनिधेश्च सतद्धर्मा-कर्मयोगादितिकात्यायनपरिभाषायांपितृधर्मप्राप्ते भ्रात्रादिः पितृ-समानधर्मेति किञ्चतस्याभावइति अभावः पञ्चविधः प्रागभावः प्रध्वंसाभावः सन्निध्यभावः अधिकाराभावः अत्यन्ताभावश्चेति तत्रसंस्कार्येसतिप्रागभावात्यन्ताभावयोरसम्भवएव प्रध्वंसाभावसं न्निध्यभावाधिकाराभावानांसम्भवोस्तीति तत्रसर्वत्रापिवचनबलात् पितुः पितृभ्यः प्रदानम्विधीयतेनसंस्कार्यपितृभ्यः तथाचस्मृतिः। पितरोजनकस्यैवयावद्व्रतमनाहितम् समाहितव्रतः पश्चात्स्वान्यजे-तपितामहान्इति पितामहानितिपित्राद्युपलक्षणम् तथाब्राह्म-ण्यविहितेतातेपतितेसङ्गवर्जिते व्युत्क्रमाच्चमृतेदेयं येभ्यएवददा-त्यसावित्यादि यत्तुप्रेतेभ्योदद्यादितिवचनन्तदधिकारसम्भवविषयं

अधिकारस्यासहायत्वेन विवाहानन्तरम् अपितस्योदातुमधिकारीति तथाच व्यास्यशृङ्गः नाश्नातियोद्विजोमांसं यस्यनोदारसंग्रहः तावेतौ मुनिभिः प्रोक्तौ अनर्हौ मखदूषकाविति नाश्नातिमांसं श्राद्धे । इति-शेषः ननुच समाहितव्रतः पश्चात्स्नान्यजेत पितामहानित्यनेनोपनयनादूर्ध्वं स्वपितृभ्यो दातुमधिकारस्तत्कथं विवाहानन्तरमितिउच्यते उपनयनादूर्ध्वं स्वपितृभ्यो दानं कर्त्रन्तराभावएकपुत्रविषयः कर्त्रन्तरसद्भावेतु प्रतिनिधिभूतः सएव तदाद्यविवाह पर्यंतं संस्कार्यस्य पितृभ्यएव दद्यादिति तथाच सुमन्तुः श्राद्धं कुर्यादवश्यं तुप्रमीतपितृकोद्विजः व्रतस्थोवाव्रतस्थोवा एकएवभवेद्यदीति तस्मात्युक्तमुक्तम्पित्रभावेप्रतिनिधेः प्रतिधर्मं प्राप्या संस्कार्यस्य पितृमातृपितामहेभ्यः श्राद्धं दद्यादिति तथाच स्मृतिः नान्दीश्राद्धं पितादद्यात् दादेपाणिग्रहे बुधः अतऊर्ध्वं प्रकर्त्तव्यम् स्वयमेवतुनांदिकमिति । अपरमपि पित्रोस्तुजीवतोः पुत्रः कुरुते दारसंग्रहम् पितुर्नांदीमुखं प्रोक्तम् नपुत्रस्यकथञ्चनेति ननुपित्रोर्जीवतोरेव तत्पितृभ्यो नान्दीमुखं प्रोक्तं मृतयोस्त्वन्यः करोतीति तत्कथं संस्कार्यस्य पितॄणामतिक्रमो युक्तः सत्यं उद्वाहनादितत्रवधिना पितृपितृभ्यएव विधानात्तत्तद्धर्मेतिपरिभाषया प्रतिनिधेस्तदतिक्रमस्य वाचनिकत्वात् अपिच वचनांतरं कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः नामकर्मणि बालानां चूडाकर्मादिकेतथा सीमन्तोन्नयनेचैव पुत्रादिमुखदर्शने नान्दीमुखम्पितृगणम् पूजयेत्प्रयतोगृही तिगृहएवोपदेशात् चूडाकर्मादिकदृत्याद्यविवाहपर्यंतं वेदितव्यं तदूर्ध्वंतु द्वितीयविवाहादावपि सर्वत्रजीवत्पितृकः पितृपितृभ्योमृतकः स्वपितृभ्यइतिविवेकः ततश्चायमर्थः पितास्वपुत्रस्य निषेकादि विवाहपर्यंत संस्कारकर्मसु स्वमातृपितृमातामहेभ्यः श्राद्धं कुर्यात् पितुरभावे संनिहिते वाधि-

काराभावेवा तत्प्रतिनिधिज्येष्ठभ्रात्रादिर्विवाहपर्यंतम् कर्मसुसं-स्कार्यस्यपितृभ्रात्रएवकुर्यात् कर्त्रन्तराभावे उपनीतएकपुत्रःस्वयमेव स्वविवाहे स्वमातृस्वपितृस्वमातामहेभ्योदद्यात् विवाहानन्तरं जीवत्पितृकः पितृपितृभ्योदद्यात् मृतपितृकः स्वपितृभ्यएवेतिसर्वमनवद्यम्।

इति श्रीश्राद्धकाशिकायां षष्ठीकण्डिका समाप्ता।

इत्यावसथिक श्रीमदतिसुखात्मज श्रीविष्णुमिश्रात्मजन्म

कृष्णमिश्रकृतौश्राद्धकाशिकायांसूत्र वृत्ती।

आभ्युदयिकंश्राद्धं समाप्तम्॥

इत्थम्पार्वणादिसर्वंश्राद्धमभिधाया धुनातृप्तास्थेत्यादिना तन्मे-रहस्यार्थत्वा त्तामन्तरेणासंतृप्ताःपितरोयांतीत्यादिदोषदर्शना-दनेकविधद्रव्यैस्तां प्रतिपिपादयिषुःसूत्रमारभते॥

## मू॰ अथतृप्तिः। १॥

वक्ष्यतइतिसूत्रशेषः अथशब्दोऽधिकारार्थःआनंतर्यार्थस्यसूत्रादेवलब्धेः तेषग्राम्यारण्यौषधिमूलफलमृगपक्षिमीनादिनानाविधद्रव्यैस्तृप्तिःक्रियतेवक्तुमित्यर्थःतथाचादित्यपुराणं विविधान्नानिमांसानि पितॄणान्तृप्तिकारणात्। दातव्यान्यनिषिद्धानि श्राद्धं चैवाधमेतृइति॥

## मू॰ ग्राम्याभिरोषधीभिर्म्मासन्तृप्तिः॥२॥

पितॄणामितिशेषः कालाध्वनोरितिद्वितीया कृततृप्तिरित्यनुवृत्तौ पुनस्तद्ग्रहणमपांग्रहणार्थं तेनौषधिजलाभ्यामेवतृप्तिर्नकेवलौषधीभिरित्यर्थः तथाचश्रुतिः आपोहवाओषधीना ं॰ रसस्तस्मादोषधयः केवलयः खादितानधिन्वन्त्योषधय उपहाद्याऽरस-

स्तस्मादाप:पीता: केवल्योनपिबन्ति यदेवोभय्य: सं्ख्ष्टोभवंत्य-
थैवविचिन्त्यं तौल्यन्वयव्यतिरेकेणार्थवादइति ओषध्योधान्यानि।
तथाचस्मृति: दशग्राम्याणिधान्यानिभवंति व्रीहियवास्तिलमाषा
अणुप्रियंगवोगोधूमाश्चमसूराश्च खल्वाश्चखलुकुलाश्चेति अयमर्थ:
व्रीहयस्तण्डुलधान्यानि तानिचश्वेतरक्तवर्णानि श्राद्धेदेयानि
कृष्णधान्यानिसर्वाणि वर्जयेच्छ्राद्धकर्मणीतिनिषेधात् प्रचेतास्त्वाह
कृष्णमाषास्तिलाश्चैव श्रेष्ठास्युर्यवशालय: महायवाव्रीहियवा स्तथै-
वचमधूलिका: कृष्णाश्वेताश्चलोहाश्च ग्राह्यास्यु: श्राद्धकर्मणि।
एतद्व्याख्यातंमाधवीये यवा:सितदीर्घशूका: महायवाव्रीहियवा
श्चयवविशेषा: मधूलिकाधान्यभेद: कृष्णाश्यलजा: कृष्णव्रीहय:
लोहा:रक्तशालय: अन्यस्त्वाह मधूलिकायावनालाजातिविशेषा:
तद्विशेषणंकृष्णा: श्वेतलोहिता: महायवाविणुयवाइति अत्रकृष्ण-
धान्यानिसर्वाणीत्यनेन विरोधान्माधवीयव्याख्यानमनुचितम् य-
वाद्विविधा महायवाव्रीहियवाश्च तिला:कृष्णा:कृष्णानिस्तुषामा-
षा: तथाचकृष्णमाषास्तिलाश्चेति अमेध्या:सतुषामाषानिस्तु-
षापिमसूरिकेतिच अणु:क्षुद्रसस्यं प्रियंगु:कंगु स्तद्बहुवचनंपृथग्ग्रह-
णंचभेदापेक्षं तथाचनिघंटु: पीततण्डुलिकाकंगु: प्रियंगु:कुकुरी-
मता सितकंगुस्तुमुनटो रक्तकङ्गुस्तुसाधिक: चनक: काककंगुःस्या
च्छ्यामाकस्तृणबीजकइति मसूरा:सतुषानिस्तुषाश्च नश्राद्धेदेया:
निस्तुषापिमसूरिकेत्युक्ते: खल्वा:खलकुलाश्चाप्रसिद्धा: कोद्रवच-
णकौवाच्यौवागाम्यत्वात् दशेतिग्राम्यसंख्यान किन्तुहविष्यसंख्या
तथाचविष्णुतिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलैशाकै: श्यामाकै: प्रि-
यंगुनीवारैगोधूमैर्मासन्प्रीयन्तइति मसूरादिग्रहणाच्च तथा मा-
संतृप्ति:पितृणान्तु हविष्यान्नेनजायतइति क्षुद्रधान्यानिश्यामाक

प्रियंगुतिलगौररक्तसर्षपवर्ज्जंसर्वाण्यश्राद्धार्हाणि निरस्तत्वात् तथा-
च वर्ज्योमर्कटकःश्राद्धे राजमाषास्तथाणवः विप्रुषिकामसूराश्च
श्राद्धकर्मणिगर्हिताः भारद्वाजोपि निरसान्यपिसर्वाणि सक्तभो-
ज्यानियानिच तानिसुन्नैरदेयानि सर्वत्रश्राद्धकर्मणीति ऋणवःक्षुद्रा
न्नानिकृष्णानि हृद्ययाज्ञवल्क्योपि मर्कटोराजमाषाश्च मसूराश्च-
णकास्तथा कोद्रवास्तलकाराजसर्षपाः श्राद्धघातकाइति राजसर्षपो-
माहरिः तथाचनिघण्टुः आसुरीराजिकाराजीक्षुरिकाराजसर्षपाः
राजिकाभस्तूत्यन्याराजिकाकृष्णसर्षपाइति चतुर्विंशतिमतेपि को-
द्रवाराजमाषाश्च कुलुत्थाश्चणकास्तथा निष्पावास्तुविशेषेणपञ्चै
तान्वर्जयेत्सदा यावनालानपितथा वर्जयन्तिविपश्चितइति राज-
माषाःपीतगौरवर्णमाषाः लोबिआ गोरवांसइतिमध्यदेशप्रसिद्धाः।
निष्पावावेल्लाः शिंबिसदृशादक्षिणापथप्रसिद्धः इतिकश्चित् चर-
कावनमुद्गाः यावनालाजोंधलीतिप्रसिद्धाः। तथाचनिघंटुःया-
वनालोदेवधान्यंजुंदलिंजुन्नलोनलइति अवनिष्पावनिषेधःकृष्ण-
विषयः कृष्णधान्यानिसर्वाणीतिनिषेधात् यवव्रीहिसगोधूमाति-
लामुद्गाःससर्षपाः पियङ्गवःकोविदारा निष्पावाश्चातिशोभनाइति
मार्कण्डेयेन कृष्णेतरस्यविहितत्वात् शोभनःकृष्णेतरः स्मृत्यन्तरे
मुद्गाढकीमाषवर्जंद्विदलानिदद्यादिति द्विदलानिदलितुंयोग्या-
निमुद्गःकृष्णः हरितमुद्गकृष्णमाषश्यामाकेति ब्रह्मपुराणेपि हरि-
तस्यविहितत्वात् माषोराजमाषः तद्ग्रहणंकुलुत्थाद्युपलक्षणम्।
तथाचमरीचिः कुलुत्थाश्चणकाः श्राद्धे नदेयाश्चैवकोद्रवाः कटुका-
निचसर्वाणि विरसानितथैवचेति। आढकीतुबरी अरहरीतिप्र-
सिद्धाः एतान्वर्जयित्वाद्विदलानिदद्यादित्यर्थः।नैत्यनुवृत्तौ विष्णु-
पुराणे मसूरक्षारवार्त्ताक कुलुत्थशणशिग्रवइति शणशिग्वादि

शाकानि शाकप्रकरणेप्रपञ्चयिष्यन्ते क्षारोयवक्षारादि शेषंस्मृति-भ्योविज्ञेयं एतानिधान्यानिनिस्तुषानि गव्यदुग्धादिसहितानिच मासंतृप्तिकराणि तथाच हृद्वयाज्ञवल्क्यमत्स्यपुराणयोः तुषहीनानि धान्यानि यान्तिसर्वाणिमेध्यताम् वर्जयित्वामसूरान्न मकुष्टान्राजमाषकान् ममूरादिधान्यत्रयं निस्तुषमपिअमेध्यमित्यर्थः । तथा अन्नंतुसदधिक्षीरगोघृतंशर्कराऽन्वितं मासंप्रीणातिवैसर्वान्पितॄनित्याहकेशवः कलायाःसर्वेपिअग्राह्याः कलायाःसर्वएववेति वक्ष्यमाणत्वात् ॥

## मू० तदभावआरण्याभिः ॥ ३ ॥

ग्राम्याभावआरण्याभिरोषधीभि र्मासन्तृप्तिः पितॄणामित्यर्थः । आरण्या अरण्येभवाःश्यामाकप्रभृतयः आरण्या ण्यौवक्तव्याइति णप्रत्ययः तथाचमार्कण्डेयः राजश्यामकस्सामाकौ तद्वच्चैवप्रसातिका नीवाराःपौष्कलाश्चैव धान्यानिपितृतृप्तयइति पुष्कलानीवारविशेषाः विष्णुपुराणे व्रीहयश्चयवाश्चैव गोधूमाःकङ्गुसर्षपाः माषामुद्गासप्तमाश्च अष्टमाश्चकुलत्थकाः श्यामाकाश्चैवनीवाराजर्तिलाःसगवेधुकाः कोविदारसमायुक्ता स्तथावेणुयवाश्चये ग्राम्यारण्याः स्मृता ह्येता ओषध्यश्चचतुर्दशेति आद्याःसप्तग्राम्याः । अष्टमाद्याआरण्याः ॥

## मू० शाकमूलफलैरोषधीभिर्वा ॥ ४ ॥

अत्रानुपूर्व्या ओषधिशब्दःप्रथमंव्याख्येयः । तथाचोक्तम् अतिरिक्तमदन्याज्यं हीनंवाक्येनिवेशयेत् विप्रकृष्टन्तुसंदध्या दानुपूर्व्याञ्चकल्पयेदिति वाशब्दोऽभावे ओषध्यभावे मूलफलादिनामासं तृप्तिरित्यर्थः । तथाचहृद्वयाज्ञवल्क्यः अन्नाभावेतुकर्तव्यं शाकमूल-

फलादिनेति अत्रपुनरौषधिग्रहणं आरण्यौषधिभावे विहितप्रतिषिद्धौषधिप्राप्त्यर्थः। तथाचमार्कण्डेयः गोधूमैरिक्षुभिर्मुद्गैः स्तीनवैः श्यामाकैरपि श्राद्धेषुदत्तैःप्रीयन्ते माससेकम्पितामहाइति। मुद्गामन्याःचीणकस्तृणधान्येषुकंगुभेदः उशनापि नीवारमाषमुद्गाश्चगोधूमाःशालयस्तथा यवाश्चचणकाश्चैव कंगुभेदःप्रशस्यतइति। ततश्चग्राम्याआरण्या विहितप्रतिषिद्धाःफलानि मूलानि पूर्वपूर्वाभावे उत्तरोत्तराणिक्रमेणग्राह्याणीत्यर्थः अथवासमुच्चयार्थमोषधीग्रहणं तैलौषधिसहितान्येवफलादीनि तृप्तिकराणिइत्यर्थः तथाहिउत्तरसूत्रंसहान्नेनेति मनुरपि भक्ष्यंभोज्यंचविविधं मूलानिचफलानिच हृद्यानिचैवमांसानि सर्वन्दद्यादमत्सरीति मूलफलैरद्भिर्वेति पाठः तथाचसूत्रान्तरम् मूलफलैरद्भिर्वेति सर्वाभावेऽद्भिस्तृप्तिरित्यर्थः तथाच पराधीनःप्रवासीचनिर्धनोवापिमानवः मनसाभावशुद्धेनश्राद्धे दद्यात् तिलोदकम् अनुकल्पोपलक्षणञ्चैतत् तेनोपवासादिकमपिज्ञेयम् आपोनिषिद्धातिरिक्ताः। तथाचभरद्वाजः नक्तोद्धृतन्तु यत्तोयम्पल्वलाम्बुतथैवच वर्जयेदितिशेषः मार्कण्डेयोपि दुर्गन्धिफेनिलञ्चाम्बु तथाल्पप्रदरोदकं यन्नसर्वार्थमुत्सृष्टम् यच्चाभोज्यन्निपानजम् तद्वर्जंसलिलन्तातसदैवश्राद्धकर्मणीति मूलग्रहणान्दशविधशाकोपलक्षणम् तथाच मूलपत्रकरीराग्रफलकाण्डाधिरूढकम् त्वक्पुष्पङ्कवचञ्चेति शाकन्दशविधं स्मृतमिति। मूलंमूलकादि पत्रं पालक्यतण्डीवादि करीरम्वंशांकुरादि अग्रं आम्रपल्लवे आदीनां फलङ्कूष्माण्डादि काण्डंसार्षपवास्तुकादि अधिरूढकन्तालास्थिमज्जादि त्वङ्मातुलिङ्गादि पुष्पन्तिन्तिडीककाञ्चनादि कवचंशिलीध्रादि॥ मार्कण्डेयः विदार्यैश्चभरुण्डैश्च बिसैःशृङ्गाटकैस्तथा केन्दुकैश्चतथाकन्दैः कर्कन्धुबदरैरपिपालेव-

तैरारुकैश्चाथ कर्कोटैः पनसैस्तथा काकोलैः क्षीरकाकोलैस्तथापि-
ण्डालुकैः शुभैः लाजाभिश्चशिलाभिश्च त्रपुसोर्वारुचिर्भटैः।
सर्षपैराजशाकाभ्यां इंगुदैराजतन्तुभिः प्रियालामलकैर्मुख्यैः।
फलुभिश्चातिलम्बकैः वेत्रांकुरैस्तालकंदैश्चुक्रिकाक्षीरकावचैः
मोचैःसमोचैर्लकुचैस्तथावैबीजपूरकैः मुंजातकैः पद्मफलैः भक्ष्य-
भोज्यैःसुसंस्कृतैः रागखाण्डवचैष्यश्च चिजातकसमन्वितैः दत्तै-
स्तुमासम्प्रीयन्ते विधिवत्पितरोन्नृणामिति अस्यार्थः विदारीतस्याः
कन्दमितिशेषइत्यन्वयः भुरुण्डोजलप्रभवः कन्दविशेषइतिमञ्जु
रीकारः केन्दुकःकचूराख्यशाकः जलप्रभवः कन्दविशेषइत्यन्यः।
बिसंमृणालम् शृङ्गाटकम् जलजंत्रिकण्टकफलं सिंघारइति प्र-
सिद्धः कन्दःसूरणकन्दः कर्कन्धुस्वादुबदरीफलम्बदरमन्यबदरफलं
पालेवतञ्जम्बीराकारंफलङ्काश्मीरप्रसिद्धं आरुकं आरुकन्दः। अचो
टःपार्वतेयपीलुफलम् पनसैः कण्टकिफलैः कटहरइति प्रसिद्धैः
काकोलैर्मधुराफलैः क्षीरकाकोलैस्तद्भेदैः पिण्डालुकैश्चतद्भेदैः।
तथाचमनुः पिण्डालुकमजगन्धंमध्वालुस्यात्तुरोमशं शङ्कालुशङ्कु
सङ्काशंकाष्टालुस्वल्पकाष्टकमितिलाजाभिर्भ्रष्टधान्यैः तथाचशंखः
लाजन्नमधुयुतान्दद्यात्सक्तून्शर्करयासहेति शिलाशैलेयं त्रपुसंत्रपु-
सीफलम् उर्वारुस्वादुककर्कटी चिर्भिटः कटुककर्कटी सर्षपोगौरस
र्षपशाकः राजशाकःशाकविशेषः कृष्णसर्षपशाकमिति माधवीये
तन्न तस्यप्रतिषेधात् इंगुदस्तापसतरुः राजतन्तुः प्रियालोराजाद-
नम्। निघण्टोक्तेः प्रियालाद्राक्षावा फलुका काटुम्बरिकाफलम्
अतिलम्बकैस्तालकदैस्तालमूलैः कन्दैः चुक्रिकाचिञ्चिकाफलम्।
तिन्तिडीफलमित्यर्थः। नागरण्डातिन्तिडीतिस्यात्यन्तरवचनात्।
तिन्तिरीकाफलंसाध्यक्षं मोचाकदलीफलम् लकुचैर्लकुचफलैः बी

जपुत्रकैः मुञ्जातकैः पद्मफलैर्वैदरद्भूतिप्रसिद्धैः भक्ष्यं लड्डुकमोदकादि भोज्यव्यंजनमोदकादिसूपयुक्तम् रागखांडवाः रसालादिपानविशेषाः तथाचनिघण्टः मार्जिताशिखरिण्युक्ता रसालारंभित स्तथा औषधिषांडवाख्याचचतुर्जातकसंयुतेति चतुर्जातकं वक्ष्यमाणम् सुसंस्कृत्तैरितिमेलकविशेषैः तथाचसूपकारशास्त्रं अर्द्धाटकं सुचिरपर्युषित स्यदध्नःखण्डस्य षोडशपलानिशशिप्रभस्य सर्पिः पलम्मधुपलम्मरिचद्विकंच शुण्ठ्याःपलार्द्धमथवार्द्ध पलञ्चतुर्णां सूक्ष्मेपटेललनयामृदुपाणिघृष्टाकर्पूरधूलिसुरभिकृतभांडसंस्था एषावृकोदरकृता सरसारसालायास्वादिताभगवतामधुसूदनेन । चोष्यैराम्रादिकैःफलैः त्रिजातकंलवंग एलागन्धपत्रमिलनं । तथाच निघण्टुः त्वगेलापत्रकैस्तुल्यै स्त्रिसुगन्धित्रिजातकम् नागकेसरसंयुक्तं चतुर्जातमुच्यतइत्यादि वायुपुराणे बिल्वामलकमृद्वीकापनसाम्रातदाडिमञ्चव्यप्रालेवताक्षोट खर्जूराम्रफलानिच कसेरुःकोविदारश्च तालकन्दतथाविसं तमालंशतकन्दश्च गन्धालूशीतकन्दकम् कालेयंकालशाकञ्च सुनिषण्णंसुवर्चला मांसशाकन्दधिचीरं वेचुवेत्राङ्कुरस्तथा वधूलःकिङ्किणीद्राक्षा लकुचम्मोचमेवच कर्कन्धुग्रीवकम्बारान्तिन्दुकम्मधुसाह्वयं नैकङ्कतनालकेरं शृगाटक परूषमम् पिप्पलीमरिचञ्चैव पटोलंवृहतीफलं सुगन्धिमत्स्यमांसञ्च कलायाःसर्वएवह्येते एवमादीनिचान्यानि स्वादूनिमधुराणिच । नागरञ्चात्रवैदेयं दीर्घमूलकमेवचेति । अस्यार्थः मृद्वीकागोस्तनीद्राक्षा पनसोव्याख्यातः । आम्रातकःकपीतनः । चव्यञ्चविका । प्रालेवतमुक्तं । आक्षोटोह्युक्तः कसेरुर्भद्रमुस्ता । तालकन्दस्तालमूलीति प्रसिद्धा । शतकन्दंशतावरी । गन्धालूःकर्चूरशाकम् । शीतकन्दं शालूकम् । कालेयकन्दारुहरिद्रा । करालाख्यशाकविशेषः...

न्दराजः । सुनिषण्णावितुन्नशाकं । सुरनुमीति ख्यातञ्जलभवं-
शाकमितिकश्चित् । सुनिषण्णं वांगेरीसदृशशाकम्बा । वांगेरीस-
दृशैः पत्रैःसुनिषण्णकमुच्यते । शाकञ्जलाशयेदेशेचतुः पत्रीतिगच्छ-
न्तइति सुश्रुतोक्तेः । सुवर्चला.ब्रह्मसुवर्चला । सूर्य्यावर्तइति गोवि-
न्दराजः । वधुलःशोकणिका । किङ्किणीद्राक्षाक्षुद्रद्राक्षा । लकु-
चोलिकुचः मोचाकदलीफलं कर्कन्धुरक्ताः गौरकाञ्चकपुष्पंयार-
म्प्रियालुविशेषः तन्दुकोसितसारः शृंगाटकमुक्तम् पक्षकम्फो-
लकसइतिप्रसिद्धफलम् दृहतीविदिग्धिकालं वरेहटाइतिप्रसिद्धम्
दीर्घमूलन्तिण्डिकेरीफलम् मूलकमित्यन्ये: पटोलोदीर्घपटोलोरा-
जीफलमित्यर्थः चिचेण्डाइतिलोके यत्तु गन्धारिकापटोलानिश्रा-
द्धकर्मणिवर्जयेदितिपटोलनिषेधः सक्षुद्रपटोलविषयः तथाचनिघ-
ण्टः पटोलीयाद्वितीयान्याखादुपत्रफलावसेदिति शेत्रप्रसिद्धं कु-
मारेश्वरसंवादेपि । पालेवतम्मृद्वीकाखर्जूराम्रकसेरुका बिल्वा-
मलकमाचोटपनसाम्रातकानिच । वेचुर्वेत्राङ्कुराःशाकंलकुचम्मो-
चमेवच शीतकन्दंबिसन्नालिङ्करकम्मूलकन्तथा । इत्यादिमेध्यम-
न्यद्वप्रदेयं श्राद्धकर्मणि । वेचुःशणभेदःइतरस्यनिषेधात् । वेचुर्म-
टाकंशाकमित्यन्यः वर्ज्यशाकान्याहविष्णुःभूस्तृणशिग्रुसर्षपसुर-
सार्कजकूष्माण्डालाबुवार्त्ती कपालक्यतन्दुलीयककुसुमादिवर्ज-
येदिति भूस्तृणोरोहिसःगन्धवणाख्यंशाकमित्यन्य.शिग्रुःसहिज-
नाइतिप्रसिद्धं सर्षपोराजसर्षपः इतरस्यविहितत्वात् सुरसाश्वे-
तनिर्गुण्डी अर्कजः श्वेतार्कजः कुहेरइतिप्रसिद्धः । पालक्यः पल-
कीतिप्रसिद्धः तंदुलीयकश्चौराइतिप्रसिद्धं वार्त्ताकंश्वेतवृन्ताकं ।
उशना । नाशिकाशणकलाककुसुंभानांबुविद्वलाम् । कुम्भीकम्बुक-
वृन्ताककोविदारांश्चवर्जयेत् । वर्जयेद्गृञ्जनंश्राद्धे काञ्जिकम्पिण्ड-

मूलकं करंजं येपिचान्येवैरसगन्धोत्कटास्तथा। नालिका प्रसिद्धा। दीर्घनालाश्चैलापल्लवेतिमाधवीये छत्राकं शिलिन्ध्रः कुम्भीश्रीपर्णिका कम्बुकंतुम्बालाबु वृन्ताकं श्वेतं कोविदारश्चमकरकम् गृञ्जनोहरिद्रनवर्णः पलाण्डुविशेषः कांजिकम्प्रसिद्धम् करंजंक्षिरिविल्वफलम् पुराणेपिवंशङ्करीरंसुरसंसर्जकम्भूस्तृणानिच अवेदोक्ताश्चनिर्यासालवणान्यौषराणिच। भरद्वाजोपि खल्वांबुकूष्माण्डफलञ्जकन्दञ्चपिप्पली। चिविकानिकरीराणि कोविदारगवेधुकाः। कुलत्थशणजम्बीरक-स्माराणितथैवच। अजादन्यद्रक्तपुष्पंशिग्रुश्चारन्तथैवच। एतानि नैवदेयानिसर्वस्मिन् श्राद्धकर्मणीति। पैठीनसिः वृन्ताकंनालिका पोतकुसुंभाश्मंतकाश्चेति शाकनामभक्ष्याइति। स्मृत्यन्तरं पिण्डालुकञ्चशुण्डीरकरम हर्ञ्चनालिकम्। कूष्माण्डंवहुवीजानि श्राद्धे दत्वाव्रजत्यधः। भविष्येपि लशुनंगृञ्जनञ्चैव पलाण्डुञ्चकानिच वृन्ताकनालिकालाबुजानीया ज्जातिदूषिताइति। एषामर्थः। वंश करीरवंशांकुरः सुरसंपर्णासइत्यन्यः सर्जकंशालफलम्। पीतसारकइत्यन्यः अवेदोक्ताःनिषिद्धनिर्यासाः व्रश्चनप्रभवादयः। तथाचमनुः लोहितान्वृक्षनिर्यासाव्रश्चन प्रभवांस्तथेति। लोहितान्वृक्ष निर्यासाश्चादयः तेनपाटलश्वेतवर्णानां हिंगुकर्पूरादीनामनिषेधः। हिंग्वादीनां विषयमग्रे वक्ष्यामः औषराणिकृतलवणानि यजीस्तवसूराश्चकोद्भवा लवणङ्कृतमितिवचनात्। सैन्धवसामुद्रादीनां विहितत्वात्। तथाच लवणेसैन्धवसामुद्रे इति अपिच सैन्धवंलवणं यच्च यच्चमानससम्भवं। पवित्रे परमेह्येतेप्रत्यक्षे अपि नित्यशः मानससम्भवंसांभरीति प्रसिद्धमिति। हलायुधः करीरं मृढपत्रकरीलइतिप्रसिद्धम् कोविदारउक्तः वज्रकादम्बोद्भवः। सूरणगवेधुका शणंशणपत्राणि। जंबीरोदन्तशठफलम् करम्भाणि

क्षारयवक्षारसौवर्च्चल सौवर्च्चकादिलवणानि । पोतम्पौतिका-
शाकम् अश्मन्तकोमहोलीट्टद्दति प्रसिद्धस्तच्छाकम् । ट्टन्ताकंश्वेतं
तथाचदेवलः काण्डूरंश्वेतवृन्ताकं कुष्माण्डञ्चविवर्जयेत् । उपमन्यु-
रपि नाश्नीयाच्छ्वेतवृंताकं मातुलानींतथाण्डकं अण्डकञ्चवाकं
मातुलानिभङ्गेति काण्डूरंकपिकच्छूः । तत्फलञ्जूरफलमित्यर्थः ।
कुश्माण्डंवृन्तालाबुसदृशफलम् पिण्डालुपेंडकद्दतिप्रसिद्धं शुण्डीरं
करमर्द्दः करवन्दफलानि । बहुवीजानिबहुवीजपूरकादीनि
पलाण्डुःश्वेतकन्दः पलाण्डु विशेषः लशुनन्दीर्घपत्रञ्चपिच्छाग
न्धोमहौषधम् । करण्यश्चपलाण्डुश्च लताकाश्चपरालिका ।
गृञ्जनम् पतनैश्च पलाण्डोदश जातय इति सुश्रुतोक्तेः । कवलं
शिलीन्ध्रः कुमारसंवादेपि वर्ज्यास्तचमसूरास्तुकोद्रवालवणाकृतं ।
भूस्तृणंसरसंशिग्रुम्पालक्यासुमकं तथा । पिण्डमूलञ्च वंशाग्रं
लोहितंव्रश्चनानिच । पलाण्डुंविड्वराहञ्च छत्रा कंग्रामकुक्कुटं
लशुनंगृञ्जनं जंबूफलानिकवकानिच तण्डूलीयक मुद्दालराज-
माषासुरीरपि । कृष्णाजात्यतसीतैलम्पयश्च जाबिका दिकमिति
सुमकङ्गादिरीसं कक्कुलभवंशाकंकुद्दालःकोविदारः आसुरीरा
जिका । कृष्णाजातीकृष्णजीरकः करीञ्जीतिप्रसिद्धश्च अतसी-
चुमा शेषम्प्रसिद्धं हारीतः नवटप्लक्षौन्दुंवरदधित्थनोल मातुलिङ्ग-
फलानिभक्षयेदिति । प्लक्षःपर्कटीः दधित्थः कपित्थःमातुलिङ्गी-
वीजपूरकः अत्र तच्चिन्त्यते । किम्पिप्पलीमरीचहिंगूनां निषेधः
उतविधिः उच्यतयथावचनदर्शनात् । तथाचविष्णुः पिप्पलीसुमक-
भूस्तृणेत्यादि शंखोपि पिप्पलीमरिचञ्चैव तथावैपिण्डमूलकम् ।
कृतन्तुलवणंसर्वसाद्यं शिग्रुञ्चवर्जयेत् व्यासः अश्राद्धेयानिधान्या-
निकोद्रवापुलकास्तथा हिंगुद्रव्येषु शाकेषुकालानाश्चशुभास्तथा

द्रव्येषु हिंगुशाकेषु कालानश्चशुभानिच निषिद्धेत्यर्थः पुलकाद्र-स्थ्कान्दसः। कालानलः कृष्णार्जकःकुहेरइतिप्रसिद्धः शुभाशुभा-ख्यःशाकविशेषः इत्यादिनिषेधः विधिस्तुपिप्पलीमरिचञ्चैवपटोलं बृहतीफलमितिवायुपुराणे कुमारेश्वरसम्वादे पिप्पलीमरिचंहींगुप टोलंबृहतीफलमित्यादि आदित्यपुराणेपि मधूकं रामठञ्चैवकर्पू-रंमरिचङ्गुडमित्यादि रामठंहिङ्गुः एवंबचनविपतिप्रत्तौकेचिदाहुः पि प्पलीमरिचं हिंगूनांसंस्कारकत्वेनविधिर्युक्तःप्रतिभाति केवलाना-म्प्रतिनिषेधः अपरेतु संस्कारान्तराभावेविधिरन्यथानेत्याहुः। षोड-शीग्रहणाग्रहणवद्विकल्पइत्येके एवञ्चसतिसंस्कारकत्वेन विधिर्युक्तः प्रतिभाति । संस्कारत्वेनस्वादूनिमधुराणिचेतिस्वादुत्वविधित्वो पपत्तेः तथाच शुंठीमरीचम्पिप्पल्योधान्यकाजाजिहिङ्गुकम् पिप्प-लीमूलसंयुक्तसंस्कारइतिस्मृतमिति शङ्खः कृष्णाजाजीविडञ्चैव-सीतपाकीतथैवच वर्जयेल्लवणं सर्वंतथाजम्बूफलानिच । कृष्णाजा जीकृष्णजीरकः बिडंविटाख्यम् । लवणं सर्वंसैन्धवसामुद्रसाम्भरि-व्यतिरिक्तम् ब्रह्माण्डपुराणे आसनारूढमन्नादंम्पादोपहतमेव चअमेध्यादागते । स्पृष्टमुक्तम्पर्युषितञ्चयत् द्विःस्विन्नम्परिदग्ध-ञ्चतथैवाग्रावलेहितम् । शर्करकीटपाषाणैःकेशैर्यच्चाप्युपद्रुतम् पिण्याकम्मथितञ्चैवतथातिलवणञ्चयत् सिद्धाःकृताश्चयेभक्ष्याः-प्रत्यक्षलवणाकृताः वाग्भावदुष्टाश्चतथादुष्टैश्चोपहतास्तथा वास-साचावधुतानिवर्ज्यानिश्राद्धकर्मणीति आसनारूढमासनोपरिकृतं पादोपहतंपदास्पृष्टम् अमेध्यादागतैःचर्मकारादिअपवित्रस्थाना-दागतैरशुद्धैःस्पृष्टम् द्विःस्विन्नन्द्विः पक्वम् परिदग्धमतिदग्धम् अ-ग्रावलेहितंश्राद्धात्पूर्वमास्वादितम् पिण्याकन्तिलकल्कःमथितङ्करे-णविलोलितन्निजंलन्दधि करेणमथितन्दधीतिनिषेधात् मथि-

तन्तर्क्ष्मित्यन्यः। सिद्धाभक्ष्याः आमलकादयःपृथक्लवणेनमि-
श्रिताः तथा दधिशाकन्तथाभक्ष्यं शुक्तञ्चौषधिवर्जितम् वर्जयेच्च-
तथान्यत्तुसर्वानभिषवानपि अभक्ष्यन्दधिशाकञ्चवर्जयेदित्यन्व-
यः। अन्यन्निषिद्धमित्यर्थः अभिषवाःसन्धानानिशुक्तमनम्लं वस्तु
कालान्तरेणद्रव्यान्तरेणात्यम्लन्नस्वभावतोत्यम्लम् तथाचबृहस्पतिः
अत्यम्लंशुक्तमाख्यातन्निन्दितंब्रह्मवादिभिरिति अत्रापवादःश-
ङ्खेनोक्तः दधिभक्ष्येष्वशुक्तेषु सर्वंचदधिसम्भवम् क्षचीसपक्कम्भ-
क्ष्यंस्यात्सर्पिर्युक्तमितिस्थितिः अनग्निकमुष्माक्षचीसन्तेनपक्क-
माषादिघृतयुक्तम्भक्ष्यमित्यर्थः। वायुपुराणेपिभक्ष्याण्येवकरम्भा-
श्चइष्टकाघृतपूरिका कृशरीमधुसर्पिश्चपयः पायसमेवच दधिग-
व्यामसंसृष्टभक्ष्यान्नानाविधानपि। शर्कराक्षीरसंयुक्ताःपृथुकानि-
त्यमक्षयाः। सक्तूंल्लाजांस्तथापूपान्कुल्माषाव्यञ्जनैःसह। सर्पिःस्नि-
ग्धानिसर्वाणिदध्नासंस्कृत्यभोजयेत् श्राद्धेष्वेतानियोदद्यात्पित-
रःप्रीणयन्तितमिति करम्भादध्यक्ताःसक्तवः इष्टकाःकासारखण्डा-
नि पृथुकाश्चिपिटाः असंसृष्टभक्ष्याःस्वकीयभक्ष्या लाजाभ्रष्टव्री-
हितण्डुलाः अपूपाःमण्डकाःकुल्माषोयावकाःएतानिपर्युषिता-
न्यपिघृतस्निग्धानिदध्नामधुनाचसंस्कृतानिभक्षयेदिति पर्युषिता
पवादइत्यर्थः यत्किञ्चिन्मधुनामिश्रंगोक्षीरघृतपायसैः दत्तमक्षय्य-
मित्याहुःपितरःपूर्वदेवताइतिमत्स्यपुराणवचनादित्यलम्बहुनाशेषं
स्मृतिभ्योनुसन्धेयम् अन्नाभावेफलमूलैस्तृप्तिरित्युक्तन्तत्रोपाय-
विधिमाह॥

## मू॰ सहान्नेननरास्तर्पयन्ति॥ ५॥

फलमूलैरन्नेनसहनराःपितॄंस्तर्पयेयुर्नकेवलैरित्यर्थः लटोलि-
ङर्थत्वात् अत्रान्नेनेतितृतीययैवसहार्थेलब्धे सहेति ग्रहणं विस्प-

ष्टार्थन्तान्तस्याप्राधान्यार्थं अथमहयुक्तेप्रधानइतिपाणीनिस्मरणा-विरोधादन्यस्यकथमप्राधान्यं नेति उच्यते अविवक्षितत्वेनास्यदो-षपरिदूषितत्वात् तथाच विवक्षस्यहिशब्दस्यप्रधानङ्कारणन्नचा-स्तुसतेति नचान्नमन्तरेणतृप्तौमूलफलादेःसामर्थ्याभिप्रायः प्रधा ननगुणसम्भावसम्भवोपपत्तौ तत्त्वादिस्पष्टार्थमेवसहेतुरुक्तं। सहा-न्न नोत्तरास्तर्पयन्तीतिक्वचित्पाठस्तत्रोत्तरामूल फलादयस्तेनैवस-हतर्पयन्तितृप्तिङ्कुर्वन्तिनकेवलानित्यर्थः एवंनहिंस्यात्सर्वभूतानी-त्यहिंसाधर्मेणतृप्तिमभिधायेदानींहिंसाधर्मेणाह।

## मू० छागोस्रमेषानालभ्य॥६॥

छागोर्वर्करःउस्रस्तूपरः सचशृंगहीनछागादि तथाचश्रुतिः स्तूपरोवाअविषाणइति मेषोमेढ्रः एतान्पितृउद्देशेनहत्वापचेदित्य-र्थः तथाचात्रिः मधुपर्केचसोमेचदैवेपित्र्येचकर्मणि अत्रैवपशवोहिं-स्यान्नान्यत्रेतिकथञ्चन स्कन्दसंवादेपि अर्थेदैवपितॄणांहियोहिन-स्तिपशून्द्विजः सयज्ञफलमाप्नोतितेचयान्तिपराङ्गतिम्। जाबालो-पि हिनस्तियःपशून्स्वार्थं मुद्दिश्यैवसपापभाक्। आज्ञापदेशतोहिं-सन्नपिस्वार्थंनलुप्यतीति अत्रैकआहुः। उस्रोवलीवर्दः तथाच म-होक्षंवामहाजंवाश्रोत्रियायोपकल्पयेदिति तदयुक्तम् महोक्षत्व-शब्देनतूपरस्योक्तत्वात् तथाचजावालः विषाणोद्भवकालेतुयोवि-षाणविवर्जितः तंमहोक्षंवदन्त्याद्यास्तूपरञ्चापिपावनमितिमहो-क्षःपक्षीवामहोक्षइतिप्रसिद्धः तथाचजातूकर्ण्यः किञ्चिल्लोहित-वर्णोहिदीर्घपुच्छोगुरुस्वरः ह्रस्वश्चोटित्वयःपक्षीसमहोक्षेतिपाठन-इति किञ्च वृषस्याभक्षत्वमुक्तम् तथाचेश्वरः साक्षाद्धर्मोवृषः-प्रोक्तोमन्मूर्त्तिर्ममवाहनः तंयदापिहियोहन्तितेनाहंस्कन्दताडितः

बुद्धदेवलोपि वेसरांश्चगजाश्वांश्चवृषभांश्चकरिमाचलं रासभश्चाश्वच-भवेद्विट्कृमिर्वाभवेभवनिति करिमाचलः शृगालः। उष्ट्रःशतवक्ति-श्चामद्दत्यनेन उक्तःशतबलादुष्ट्रस्तूपरोचगभक्षितेष्वित्यभिधानात्। तदपिन पश्वालम्भप्रकरणात् नहन्यान्मत्स्यसूकराविति निषेधात् अतश्चोष्ट्रशब्देनकलौछागमेषावेव पशुपञ्चकमध्येतयोरेव भक्ष्य-त्वाद्वचनोक्तत्वाच्च तथाचश्रुतिः पुरुषोश्वोगौरविरजोभवन्तेताव-न्तोवैसर्वेपशवइति गोभिलसूत्रञ्च छागोमेषोवाआलभ्याइति। ननुचछागमेषग्रहणेनैवतल्लब्धेः किमर्थमुष्ट्रग्रहणं उच्यते विशेष-विध्यर्थत्वादित्यदोषः। यथाच स्कन्दसम्वादे वार्ध्रीनसस्यमांसञ्च लकोलाहाजस्तुपरंघृतमिति। तद्यादित्यवेदत्तं मानन्त्यायतिला-मधु अन्यच्च अनन्ताखड्गमांसेनलोहछागाच्च नृपरादिति। अत्र-कश्चिन्नाप्यक्तदाह। छागोसृमेषानिति पुंस्त्वमविवक्षितं उपादीय-मानत्वा त्पशुनायजेतेतिवत् सर्वासांपशुजातीनांमारणंभक्षणा-न्तथा। विधामेतुनदोषस्यादन्यथामरणंव्रजेदिति। अन्येत्वाहुः पशुनायजेतेत्यत्रापिपुंस्त्वस्यैवविवक्षितत्वात् पुंव्यक्तिरेवध्यानस्त्री-व्यक्तिरिति। अत्रानूचानाः प्रमाणम्॥

## मू॰ क्रीतालब्ध्वावाऽस्वयम्मृतानाहृत्यपचेत् ७

वाशब्दःपशुलब्धाभावे अस्वयंमृतग्रहणम्। निषिद्धवर्जनोप-लक्षणं तेनपश्वभावेविहित मृगपक्ष्यादिमांसानिक्रय लाभाभ्या-माहृत्यपचेन्न निषिद्धमित्यर्थः। विनामांसेनयच्छ्राद्धं कृतमप्यकृतंभ-वेदिति। श्राद्धवैकल्यापत्तेः पद्मपुराणे विनामांसेनयच्छ्राद्धन्तन्न तृप्तिकरम्भवेत्। क्रव्यादाः पितरोयस्मात्तस्मात्तेनैव तान्यजेदिति अत्रकेचित्प्रकारविश्लेषम बुध्वास्वयंमृतानपिपचेदित्याहुः। तदयुक्तं

तेषांनिषिद्धत्वात् तथास्मृति: उच्छिष्टस्यघृतादानंस्तमांसस्यभक्षण-
म् अगुल्यादंतकाष्ठस्यतुल्यंगोमांसभक्षणै: तथा शणशाकस्य त-
स्मांसक्करी णमथितंदधिअगुल्यादन्तघर्षंचतुल्यङ्गोमांसभक्षणैरिति
महाभारतेपि विषच्छन्नहतञ्चैवव्याधितिर्यग्घतन्तथा नप्रशंसन्ति
वैश्राद्धे यच्चशस्त्रविवर्जितम् विषच्छन्नारण्येपतितपलादौविषप्रक्षेप-
स्तेनहतं तिर्यग्घतंसंहाति रिक्तकादिहतं तयोरभ्यनुज्ञानात्।
तथाचसिंहव्याघ्रहतंचयत् इति प्रशस्तमितिशेष: अथवाश्राद्धे त-
स्यापिनिषेधोविधिर्नित्यभोजनविषय: एकमूलकत्वात् शस्त्रविव-
र्जितंस्वयंमृतं अनुपाकृतमांसानिसौनंवल्लूरमेवच स्मृतिलोकनि-
षिद्धांश्चमृगमीनाण्डजानपि सौनंहिंसास्थानभवम्। अनुपाकृतंसं
स्कारहीनम् वल्लूरंशुष्कंवर्जयेदिति। पृष्टमांसंवृथामांसंवर्ज्यंमां
सञ्चपुत्रक। नभक्षयन्तिसततम्प्रत्यक्षलवणानिचेति। मार्कण्डेय:।
पृष्टमांसम्भै रइतिप्रसिद्ध तथाचवामनपुराणे पृष्टमांसाशिनोमूढा
स्तथैवक्रौञ्चजीवन: क्षिप्यन्तेवृषभक्ष्येतेनरकेरजनीचरोत्ति शेषम-
न्यतोज्ञेयम् ननुवाफलमूलैरौषधीभिर्वेत्यहिंसाधर्मेणाटहिमुक्त्वा-
नन्तरंछागोस्नमेषानालभ्येति हिंसाविधायेदानीं क्रयलाभौसूच-
यतावाशब्देनहिंसानिषिद्धेति। तथाच कन्दमूलफलाभावेमांसा-
न्याहुर्मनीषिण: पुण्यानिमुनिगीतानिलब्धानिच वधम्बिनेति। च-
तुर्विंशतिमते महाभारतेपि क्रीत्वास्वयम्वाप्युत्पाद्यपरोपहृतमेववा।
देवान्पितॄनर्च्चयित्वाखादन्मांसन्नदुष्यति एषउक्तोविधिर्ब्राह्मः ।
सर्वकामफलप्रदइति तस्माद्वाशब्देन हिंसान्निषिध्यक्रयलाभाविव
सूत्रकाराभिमताविति। अत्रोच्यते यदुक्तं। हिंसानन्तरंक्रयला-
भौसूचयताहिंसानिषिद्धेति। तन्न पशुवध्यासम्भवेक्रयलाभयोरनु
क्तत्वात् तथाचस्कन्दसम्वादे। मांसाभावेकृतेश्राद्धे ध्यायन्तेपितृ-

देवताः करिष्यतिसुतोलब्ध्वाश्राद्धं पश्वाप्त्वामिषं । ददातिलब्ध्वामांसन्नतंशपन्तिरुषामुहुरिति मांसाभावेपश्वसंभवे । यत्वभिहितं कन्दमूलफलाभावइत्यनेन हिंसानिषिद्धेति तदप्ययुक्तं । कंदमूलफलाद्यभावेवधंविनेत्यहिंसाधर्मेण प्रतिपादकत्वान्नहिंसानिषिद्धेति । यच्चाभ्यधायिक्रीत्वास्वयंवाप्युत्पाद्येत्यादिनाब्राह्मविधिरिति तदपिमन्दमिति तस्याप्यमांसभुग्दाक्षिणात्यपरत्वेनतद्देशविषयत्वात् दृश्यतेच देशविषयात्याचारः तथाच बृहस्पतिः । उद्दुह्यतेदाक्षिणात्यैर्मातुलस्यसुताद्विजैः । मध्यदेशेचर्मकाराः शिल्पिनः खगवासिनःमत्स्यादाश्चनराः सर्वेगम्यान्नृणांरजस्वलाः । पर्वतेमद्यपानार्यैनैतेदण्डस्यचार्हकाइत्यादि पठन्तिच पृथिव्यास्त्रिषुभागेषुमांसभक्षण माचरेत् यत्तु बृहस्पतेवचनम् । नदेशानांनविप्राणांनयुगानांद्विजोत्तमाः । धर्म शास्त्रेषुवैभेदोदृश्यमांसभक्षणइति । तद्दक्षिणव्यतिरिक्तदेशविषमित्यविरोधः किञ्चयद्येवम्नामभविष्यतच्चाग्नीषोमीयम्पशुमालभते छागोस्त्रसेषानालस्येत्यादिविहितहिंसाप्रतिपादकानिवाक्यान्यनर्थकान्यभविष्यन्निति तस्मात्पशुवधासंभवेक्रीत्वालब्ध्वेति सूक्तमितिसिद्धं । इदानीं छगोरभ्रक्विरिछागपर्यन्तेषुपतत्विणाम् । मांसंविशाणशशयोरुरोश्चक्रमतः सुरान् धिनोतिचपितृंश्चैवमांसान्पायसमेवचेत्यादिवचनविहितांतृप्तिमुपक्रमते ॥

## मू० मासद्वयन्तुमत्स्यैः ॥ ८ ॥

मत्स्याःपाठीनादयोविहिता ननिषिद्धाः तैर्द्विमासंतृप्तिरित्यर्थः । तथाचमनुः । द्वौमासौमत्स्यमांसेनेति तुशब्दोविशेषणार्थः तेनमत्स्यविशेषेकालविशेषइत्यर्थः तथाचापस्तंबः शतवले मत्स्यस्यमांसेना-

यथ्यातृप्तिरिति यत्तु मत्स्यैश्चतुरोमासानिति पैठीनसिवचनं तच्छ-
शल्कविषयम् । तथाचयमः । शशल्कांश्चतुरोमासानिति । प्रीणा-
यन्तीतिशेषः । ननुचमत्स्यांश्चकामतोऽभ्यासोपवासस्त्र्यहंवसे-
दिति प्रायश्चित्तस्योक्तत्वात् कथमेवमिति उच्यते तस्यनित्यभोज-
नविषयत्वाद्देवपितृनिवेदनविषयत्वाच्च तथाचागस्त्यः । ऋतेयो-
हव्यकव्याभ्यांमत्स्यमांसंसमश्नुते लभतेपातकंसोसर्वमांसाशिनां-
नृणाम् । काश्यपोपि । कालशाकञ्चमत्स्यांश्चपरमान्नन्तिलोदनं ।
अनिवेद्यनभुञ्जीतपितृणांदेवतैः सहेति एवंतर्ह्येकतः सर्वमांसा-
निमत्स्यमांसानिचैकतः एकतः सर्वपापानिब्रह्महत्यातथैकतः ।
तथा मत्स्यादः सर्वमांसादः इत्यादिवचनद्वन्द्वन्निरर्थकमिति मैवं-
वोचः कार्तिकादिकालविशेषविषयत्वेनसार्थक्यकत्वाद्विन्ध्यादि-
देशेनिषेधकत्वाच्च । तथाचनारदीये नमात्स्यमश्नीयेन्मांसंनकौर्म-
मान्यदेवहीतिकार्तिकादिचेष्टावकालइतिशेषः । मत्स्यादाश्चनराः
सर्वइति मध्यदेशे इहस्मतिनोक्तं । किन्त्वेकतइत्यर्थान्तरम् । स-
र्वमांसानिभक्ष्यमांसा येकतस्तथा भक्ष्यमत्स्यमांसानिचैकत तथा
पापानिसर्वेषाम्: एकतस्त्वाब्रह्मज्ञानंचैकतेति पापायज्ञादिक-
र्मेति ब्रह्मलाक्षी हत्यास्याद्ब्रह्मज्ञानइति चन्द्रगोमी एकतश
शादिसर्वमांसान्येकतमत्स्याएकतसर्वयज्ञा एकतब्रह्मज्ञानमेकतस्तु-
ल्यार्थंसमानमित्यर्थः । तथाचप्रचेताः याभिस्तृप्तिः पितृणांस्यादजवा-
र्ध्रीनसादिभिः साभवेन्मत्स्यमांसेनदत्तेनश्राद्धकर्मणीति तस्माच्छ्र-
द्धे मत्स्यैः पितृन्सन्तर्प्यस्वयमपि भुञ्जीतेतिनिरवद्यम् । तथाचब्रह्म-
पुराणम् हव्यकव्यार्थतो विप्रान्भोजयित्वाविधानतः वैसारिणां-
स्तुभुञ्जानोनलिप्येतेनसाद्विजइति । मत्स्यानाहयाज्ञवल्क्यः राजी-
वान्राजतुण्डांश्चसशल्कांश्चसर्वशः शङ्खोपि राजीवान्सिंहतु

गडांश्च सशल्कांश्चविशेषतः । पाठीनरोहितौ भक्ष्यातेमत्स्येष्वतिपावनादिति । राजीवाःपद्मवर्णाः सिंहतुण्डाः सिंहमुखाः सशल्काःशुक्त्याकारावयवयुक्ताः जातूकर्ण्योपि शशश्चमत्स्येष्वपिहि सिंहतुण्डकरोहिताः । क्षुद्रम स्येषुकश्चेतिमेध्यो रोहितवन्मतइति निषिद्धमत्स्यानाहस एव । गोमत्स्योगुच्छमत्स्यश्च चर्मकाराह्वयस्तथा नैतेद्विजातिभिर्भक्ष्यास्तथा चिलिचिमाभिधः । शृङ्गीन्नकेचिदिच्छन्तिप्रशस्तोन्हव्यकव्ययोः अयंविकल्पोनित्यभोजने व्यवस्थितः । प्राघुणकादौ तथा मत्स्यश्चिलिचिमो नाम नभक्ष्योहिद्विजन्मनां चिलिचिमः सितगौरोनरवाङ्कसदृशः समुद्रजइत्यायुर्वेदः । नान्धावर्तालिमत्स्यइल्लिसइवांग विकण्टकगाहिप्रभृतयः क्षुद्रमत्स्यश्चस्थलत्यक्तरेतावदेवावगन्तव्याः ॥

## मू० मासत्र्यन्तुहारिणेन ॥ ६ ॥

हरिणस्तामम्गस्तन्मांसेन त्रिमासन्तृप्तिरित्यर्थः । एणः कृष्णमृगः प्रोक्तस्ताम्रोहरिणउच्यतेइति सुस्रुतत्वात् । कृष्णसारेणाधिकतृप्तेः तथोचोशनाः चतुरोमासान्कृष्णसारेणेति । यत्त्वष्टावैणेयेणेतिपैठीनसिनोक्तम् अष्टावैणयमांसेनेतिच मनुनातत्तूपरकृष्णसारविषयेभवतुमर्हति । तूपरस्यविशिष्टोक्तेः अन्यथोशनसाविरोधात् । तथाचोक्तम् स्मृतिद्वैधेतुविषयः कल्पनीयः पृथक्पृथगिति । तुशब्दोविशेषार्थः तेनमृगविशेषेकालविशेषइत्यर्थः । तथाचमार्कण्डेयः करोतितृप्तिन्नववैरुरो मांसंनसंशयः । रुरुःशम्बरः शरदिगलितशृङ्गइत्यायुर्वेदः । मनुरपि रौरवेणनवैवतु यत्तु रुरुः प्रीणातिपञ्चवेइति यमोक्तंयच्चपञ्चरौरवेणेति । गोभिलसूत्रम् तदकृशाख शृङ्गरुरुविषयं यत्पुनर्देवलेनोक्तम् । त्रीन्मासान्रुरुभि

र्गैरितितद्धरिणसहशरूवविषयम्। नचयथाशब्दविषयोविकल्पः शक्यतेवक्तुं गृह्याणामनेकत्वात्तद्विषयानुपलम्भेः। तस्माज्जीवद्विषयोविकल्पोभवतुमर्हति। मार्कण्डेयः पुष्णातिचतुरोमासाञ्छशस्य पिशितंपितॄनिति यत्तुदेवलेनोक्तम् शशैःषण्मासिकीतृप्तिरिति शशःप्रीणातिषण्मासानितिचयमेनतद्वृहच्छशविषयमिति अविरोधः अन्यथाविरोधाद्धर्मबाधापत्तेः। तथाचव्यासः धर्मंयोबाधतेधर्मोनसधर्मः कदाचन। अविरोधात्तुयोधर्मः सधर्मः सद्भिरुच्यते। तस्माद्विरोधेधर्मस्यनिश्चित्यगुरुलाघवं। तयोर्भूयस्तरं विद्वान्कुर्याद्धर्मविनिर्णयं तत्त्वेविप्रतिपन्नानां वाक्यानामितरेतरं। विरोधपरिहारोवनिर्णय स्तत्वदर्शिनइति। नचश्वापदजातेरनेकत्वादेवं नघटतइतिवाच्यम्। तथावामनः कदलीकन्दलीचीनश्चमूरुप्रियकावपि ससुरूश्चेतिहरिणाअमी अजातयोनयः। कृष्णसाररुरुन्यंकुरं कुशम्बररोहिणाः गोकर्णपृषतैणस्य रोहिताश्चमरोमृगाः गन्धर्वःशरतोरामसृंगयोगवयः शशाइत्यादयो मृगेन्द्राद्याइति। एवमन्यत्रापि॥

## मू० चतुरऽऔरभ्रेण॥ १०॥

पितॄणान्तृप्तिरित्यर्थः। तथाचमनुः अरसणोथचतुरइति उरभ्रआरण्यमेषः नवमेषमांसेनेति ग्राम्यस्यवच्यमाणत्वात्। अन्येत्वाहुर्मेषएवेति। तदयुक्तम् श्रुतिविहितत्वात्पौनरुक्त्यदोषाच्च तथाचश्रुतिः। वरुणावारण्योमेषइति यत्तु मेषेणपञ्चमासानिति पैठीनसिनोक्तम्। तदारण्यरूपविषयं अत्रैतत्सन्दिह्यते किंगवयमांसंभच्यमभच्यञ्चेति तत्रैकआहुः विहितत्वाद्भच्यमिति तथायमः। गावयंवद्रसम्मितात् एकादशमासांस्तृप्यन्तीतिशेषः मार्क-

यद्येयोपि गवयस्यतुमांसेनतृप्तिःस्यादृदश मासिकीति तदयुक्तम् श्रुतिविरुद्धत्वात् तथाचश्रुतिः । सर्वंपुरुषमालभन्तस किंपुरुषोभव द्यावश्वंगाञ्चतौगौरश्वा गवयश्वाभवनांयम विमालभन्तसउष्ट्रो-भवद्यमजमालभन्त सशरभो भवत्तस्मादेतेषां पशूनांनाशितव्यम-पक्रान्तमेधाह्येतेपशवइति । श्रुतिस्मृतिविरोधेतु श्रुतिरेवबलीयसी-तिश्रुतेर्बलवत्त्वाच्च । नचश्रुतिविरुद्धस्मृतिरादरणीया तथाचचतु-र्विंशतिमतं स्मृतिर्वेदविरोधेन परित्याज्यायथाभवेत् । तथैवलौ-किकंवाक्यं स्मृतिबाधापरित्यजेदिति श्राद्धविषयत्वेन गवयस्यावि-धिरित्यन्ये । अत्रानूचानाःप्रमाणम् ॥

## मू० पञ्चशाकुनेन ॥ ११ ॥

शाकुनिर्भक्ष्यपक्षीतन्मांसेनेत्यर्थः । तथाचमनुः शकुनेनाथप-ञ्चेवइति । यत्तु शाकुनैरचतुरोमासानिति देवलेनोक्तम् यच्चचतुरः शाकुनेनेतिचगोभिलेन तद्विहितप्रतिषिद्धहारीतादि पक्षिविषयं यच्चशकुनेनसप्तेति पैठीनसिनोक्तम् तदतिपवित्रकपिञ्जलादि पक्षिविषयं सोमपानोद्भवत्वेन पावित्र्यात् । तथाचश्रुतिः सयत्सो-मपानमासततः कपिंजलःसमभवदिति । जरत्कारुरपि गौरःक-पिंजलोमेध्यः कृकषालाच्चवर्हिणइति । वर्हीनीलकण्ठः सुमेधाः किञ्चिल्लोहितवर्णेति दीर्घपुच्छोगुरुतरः । कृखचोटिस्तुयःपक्षीस-मडोच्चेतिपावनइति चोटिश्चंचुः भक्ष्यानाह शङ्खः तित्तिरञ्च-मयूरञ्चलावकञ्चकपिंजलम् वार्ध्रीनसंवर्त्तकंचभक्ष्यानाहयमः सदा सदेतिश्राद्धादेरन्यत्रापि जावालः भक्ष्याःकपिंजलोनीलरत्वा-टीवन्यपदाखुधाः भक्ष्याविति नीलःकृष्णातित्तिरिः कपिंजलोगौ-रः वन्यपदाखुधोवन्यकुक्कुटः वनेजलेभवो जलकुक्कुटइत्यन्ये तत्र

कलविङ्कंप्लवंहंसमितिमनुना प्लवशब्देनतस्यनिषिद्धत्वात् चक्रयाकंप्लवङ्कोकमितिशङ्खनिषेधाच्च भारद्वाज्यामांसेनेतिकात्यायनोक्तेर्भरद्वाजोभक्ष्यः यत्तु नखादेंस्तुभरद्वाजमितिसुमन्तुनोक्तम् तत्रभरद्वाजोन्यश्चञ्चुविषयः कौजिड्डिथाइतिप्रसिद्धः तथोचनिघण्टुः वटोवटकइत्युक्तोभरद्वाजोन्यश्चञ्चुटः वटक्कोग्योद्वितीयस्तुखंजरीचित्रपुच्छकः इति सुमन्तुः भक्ष्यास्तुनीकण्ठःस्याद्धरीतोलावतित्तिरी हारीतोविश्चितप्रतिषिद्धः। कुकुटहारीतभक्षणे द्वादशरावमनाहारइतिशङ्खप्रतिषेधात् अन्यत्स्मृतिस्योक्तं यम् वर्ज्यानाहमनुःक्रव्यादः शकुनीन्सर्वांस्तथाग्रामनिवासिनः अनिर्दिष्टांश्चैकशफांटिट्टिभञ्च विवर्जयेत्। कलविङ्कंप्लवंहंसंश्चक्राह्वंग्रामकुक्कुटम् सारसंरज्जुदालञ्चदात्यूहंशुकसारिका। प्रतुदाञ्जालपादांश्चकोयष्टिनखविष्किरान् निमज्जतश्चमत्स्यादान्सौलंवल्लूरमेवच। बकंचैवबलाकांश्चकाकोलङ्खञ्जरीटकम्। मत्स्यादान्विड्वराहांश्चमत्स्यानेवचसर्वशइति। क्रव्यादोगृध्रादयःग्रामवासिनःपारावतादयः अनिर्द्दिष्टभक्ष्यत्वेनाज्ञातः एकशफाश्वखादयःटिट्टिभोनिष्ठुरशब्दभाषीटिटिहिरीतिप्रसिद्धः कलविङ्कोगृहचटकः प्लवोजलकुक्कुटः चक्राह्वःचक्रवाकः रज्जुदालोवृक्षकुक्कुटः दात्यूहः कालकण्ठः प्रतुदःश्येनःजालपादाजालाकारपादाः कोयष्टिःशिखरी नखविष्किराश्चकोरादयः निमज्जन्तोमत्स्यादान्निमज्ज्यमत्स्यदा काकोलोगिरिकाकः मत्स्यादाअनिमज्जन्तोपि अन्येप्रसिद्धः देवलः उलूककुररश्येनगृध्रकुक्कुटवायसाः चकोरःकोकिलोरज्जुदालकश्चकमज्जकौ पारावतकपोतौचनभक्ष्याः पक्षिणोस्मृताः। जरत्कारुः कारापिकान्कपोतञ्चस्रोतकंरक्ततुण्डकम् सकृप्रजंसारिकाञ्चकलविङ्कञ्चवर्जयेत् कारापिकाशकुनशास्त्रो-

क्ताः स्तोतकश्चातकः रक्ततुण्डःशुकः मरुत्प्रजःकाकः लोमशःग्रामकुक्कुटः। आतापीमांसानपिवर्जयेत् आतापीचिल्लःबेदनिधिः काकारिपिङ्गलाक्रौञ्चःवकोटोटिट्टिभसारसौ चापभासौभृङ्गराजश्चान्द्रञ्चरमत्वाव्रतञ्चरेत् काकारिरुलूकः पिङ्गलामुखूमरद्रुतिप्रसिद्धः वकोटोवकः चाषोनीलपक्षी स्वर्णपक्षीतिप्रसिद्धः जग्ध्वाप्राश्यचान्द्रञ्चान्द्रायणमित्यर्थः। शङ्खःहंसश्मद्गुञ्चकङ्काकङ्कोलङ्ङ्रीटकम् मत्स्यादाश्चतथामत्स्यान्वलाकांशुकसारिके। चक्रवाकप्लवङ्कोकप्लगण्डकप्लजगङ्कपिम् माससेकंव्रतङ्कुर्यादेतांश्चैवनभोजयेत् मद्गुर्जलवायसः व्रतञ्चान्द्रायणम् मत्स्यव्यवस्थाप्रागुक्तानिषिद्धमत्स्याशाश्चेत्यर्थः। धौम्यः पारावतंरथांगञ्चमरालञ्चकुलिङ्गकम् जग्ध्वाह्निकुक्कुरंग्राम्यंव्रतेनापिनशुध्यति रथांगश्चक्रवाकः मरालोहंसः कुलिङ्गकोव्रतेनचान्द्रायणेनेत्यर्थःअन्यत्स्मृतिभ्योज्ञेयम।

## मू० षट्छागेन ॥ ११ ॥

पितॄणांतृप्तिरित्यर्थः तथाचमनुः। षण्मासञ्छागमांसेनेतिछागोमहोक्षः वाध्रीनसादन्यः तद्विधेर्विशिष्टत्वात्। यत्तु। छागलसप्तमैमासानिति मार्कण्डेये नोक्तम् तदारण्यछागविषयम् तथाचश्रुतिः। सोमायकुलुङ्गआरण्योजइति। यच्चनचतृप्यंत्यजेनत्विति देवलेनोक्तम् तद्वार्ध्रीनसव्यतिरिक्तपक्षिविषयं यत्पुनर्द्वादशमासांछागेनेति पैठीनसिनोक्तम् तत्तूपराजविषयम् तस्यातिपावनत्वात् तथाचसमहोक्षेतिपावनद्रुतिप्रागुक्तामित्यविरोधः।

## मू० सप्तकौर्मेण ॥ १२ ॥

कूर्मःकच्छपःतन्मांसेनेत्यर्थः तथाचदेवलः कूर्मःस्यात्सप्तमासिकी

ति यमोपि कूर्मःप्रीणातिसप्ततिवति यत्तु शशकूर्मयोर्मांसेनमासैरे-
कादशभिस्त्विति मनुनोक्तम् तद्वृहत्कूर्मविषयमारण्यविषयमेवेत्य-
विरोधः यत्तु नखादेत्कूर्मसूकराविति निषेधस्तद्विषयमग्रेवक्ष्यामः ।

## मू० अष्टौवराहेण ॥ १३ ॥

वाराहआरण्यसूकरस्तन्मांसेनेत्यर्थः तथाचदेवलः अष्टौमा-
सान्वराहेणेति यत्तु दशमासांस्तुतृप्यन्तिवाराहमहिषामिषैरि-
तिमनुनोक्तम् । तन्मांसलवराहविषयं तमग्घृतसम्भूतत्वेनौचि-
त्यात् ।तथाचश्रुतिः अग्नौहवैदेवाघृतंकुम्भंप्रवेशयांचक्रुस्ततोवरा-
हाःसम्बभूवुस्तस्माद्वराहमेदुरोघृताद्धिसम्भूतइति यत्तु अब्दमासा-
च्छूकरामिषमितिमार्कण्डेयेनोक्तम् तदमांसलविषयम्भवितुमर्ह-
ति अन्यथाविरोधात् अत्रकश्चाहुः । नखादेत्कूर्मसूकराविति नि-
षेधाद्वराहकूर्ममांसन्नभक्ष्यमिति । तन्न । तस्यकार्त्तिकादिवैष्ण-
वकालविषयत्वाच्छ्रुतवराहविषयत्वाद्वा तथाचनारदीये । का-
र्त्तिकेसूकरंमासंयस्तुभुंक्तेतिदुर्मतिः तद्भुक्तेजायतेपापीविष्टा-
शीग्रामसूकरः नमात्स्यंभक्षयेन्मांसन्नकौर्मंनान्यदेवहिइतितङ्-
कौरौरवान्भुक्त्वा नेत्यनुवृत्तौ हारीतः पारावतपाण्डुसूकरसारि-
केतिउपमन्युरपि ग्राम्यश्वेतवराहौतुनभक्ष्यौद्विजपुङ्गवैरिति ।

## मू० नवमेषमांसेन ॥ १४ ॥

मेषोग्राम्यभेदः तन्मांसेनेत्यर्थः । तथाचयमः मेषैः प्रीणातिवैन-
वेति यत्तु तृप्यन्त्येकादशाविकैरितिदेवलेनोक्तम् । यच्च तथैकादश-
मासंवाअरण्यम्पितृतृप्तमितिच मार्कण्डेयेनतत्तु परविषयम् अच-
विकारप्रत्ययेप्रकृतेतत्परिहारेणपुनर्मांसग्रहणम् मासविकारप्रा-
प्त्यर्थं तेनतद्विकाराअपिकालान्तरसाधितादेयाइत्यर्थः । तथा-

चस्कन्दसम्वादे अलेहा अपि गोधूमयवगोरसविक्रिया: तथा मांस-
विकारास्तदधिक्षीरगुडस्थ्चेति । भक्षयेदितिशेष: ।

## सू॰ दशमासिंहिषेण ॥ १५ ॥

तृप्तिरित्यर्थ: तथाचदेवल: । दशमाहिषमांसेनेति । यत्त्वे-
कादशमासान्महिषेणेति पैठीनसिनोक्तन्तदारण्यविषयंतूपरविष-
यंग्राममहिषभक्षणन्तदेशविशेषेव्यवस्थितम् तथाचयम: । कासरो-
हिगिरौमेध्याइति आहप्रजापतिरिति कासरोमहिष: । ननुचग्र-
भक्ष्या: पशुजातीनाङ्गोखरोष्ट्रा: सकुञ्जरा: सिंहव्याघ्रार्क्षशरभा: ।
सर्पाजगरकास्तथा शशमूषकमार्जारनकुलग्राम्यसूकरा: सृगा-
लऋषभद्वीपिगोलांगूलमर्कटाइति।तथा वार्दमौदंष्ट्रनारस्त्वारङ्गा-
रंचरासभं।कौंग लोमशिकम्मांस ञ्जग्ध्वाभवतिविट्कृमि: । वेशरो-
ष्ट्रगजखाश्वटषभान्करिमाचले रासभम्प्राश्यचभवेद्विट्कृमिर्वाभवे
भवइतिदेवलव्याघ्रपा दब्द्वदेवलादिवचनैरभक्ष्यमध्येमहिषानुक्ते:
सार्वत्रिकम्महिषभक्षणङ्किन्नस्यादितिचेत् मैवंभाणी: गिरिमन्तरे-
णतद्भक्षणमहादोषापत्ते: । तथाचभारद्वाज: । शङ्खमूषकसर्पास्तुसै-
रभंचगिरिंविना । जग्ध्वाद्विजानशुध्यन्तिप्रायश्चित्तशतैरिति ।
तस्मात्देशविशेषएवतद्भक्षणं व्यवस्थितमितिसूक्तम् वार्दंवार्षभंउ-
दोजलपशुस्तस्य । जलमानुषइत्येके । नरस्मानुषम् हारंहरिश-
ब्दवाच्यानांसिंहाखकयद्विभेकादीनां कारङ्गारिणां कौगोबन्य:
श्वालस्य लोमशिकालोखरीतिप्रसिद्धा ।तस्य लोमस्कम् विट्कृमि-
विष्ठाक्रिमि: । द्वीपीव्याघ्रविशेष: गोलांगूलोवानरविशेष: मर्क
टइग्रहणश्वादिपञ्चनखोपलक्षणम् ।

## सू॰ एकादशपार्षतेन ॥ १६ ॥

पृषतश्चित्रमृगस्तन्मांसेनेत्यर्थ: । तथाचगोभिल: एकादशपार्ष-

तेनेति। तत्रैतद्वक्तव्यम् पृषतशब्देनकिञ्चित्गुणोवाच्यः किंवाचित्र मृगजातिरिति तत्रयदिचित्रगुणोवाच्यःस्यात्तर्हिरुरुच्छागादीनामपि पृषतः गुणेएकादशमासतृप्तिहेतुः स्यात्। ततश्चविहिताः सर्वेपि पृषताःसन्तः एकादशमास तृप्तिहेतवइत्यर्थःस्यात्। अथपृषत- शब्देनचित्रमृगजातिर्वाच्यं स्यात्तर्हितज्जातेर्दैववशात्कथञ्चिद्दष्ट- प्रतत्वे एकादशमासतृप्तिहेतुत्वं नस्यात् प्रत्युतविहितजातेः परि त्यागश्चेत्यर्थःस्यात्।तस्मात्पृषतशब्दस्यकथङ्गतिरित्याक्षेपः इतुरच्य तेव्याख्यानतोविशेषः प्रतिपत्तिरितिन्यायेनव्याख्यातचित्रमृगसंज्ञै वैतरव्याप्रत्तं कृत्वाचित्रमृगस्यैव तावन्मासतृप्तिहेतुनान्यस्येति एवंसतिमृगशब्दस्या न्वेषणाच्छागादिबाधकत्वा भावात्पृषतत्वे सत्यपिनतस्यान्वयोयुक्तः तस्माच्चित्रमृगेणैवतावन्मासतृप्तिरिति सिद्धम्। ततश्चपञ्चतृप्यन्तिपार्षतैः पार्षतेणेहसप्तवैनवमासान्पार्ष तेनएकादशपार्षतेनेति देवलमनुपैठीनसि कात्यायनवचनानां विषयानुपलब्धेर्विकल्पाएव शक्यन्तेवक्तुंनविषयाः। अथवासर्वमृ गजातिषुपृषतत्वं विशिष्टत्वेनैकादशेतिसर्वेभ्य स्तृप्तिराधिक्यमित्यर्थः ततश्चैवंविषयः। पञ्चतृप्यन्तिपार्षतैरिति देवलवचनं हरिणसादृश्य चित्ररुरुविषयं पार्षतेनेहसप्तवाइति मनुनोक्तंवक्रशाख शृङ्गचित्र रुरुविषयं। नवमासान्पार्षतेनेति पैठीनसिनोक्तं वरचित्ररुरुविषयं एकादशपार्षतेनेति चित्रतूपरविषयमित्यविरोधः अयमाशयः।या- न्मासान्रुरुभिर्मृगैरिति त्रिमासतृप्तिविषयस्य रुरोःपृषतत्वेन पञ्च- तृप्यन्तिपार्षतैरिति तृप्तिविशेषः रुरुःप्रीणातिपञ्चकैरिति पञ्च- मासतृप्तिविषयस्यतु रुरोःपृषतत्वेन एकादशपार्षतेनेहसप्तवैइति तृप्तिविशेषः। रौरवेणनवैवात्विति नवमासतृप्तिविषयत्वेन एका- दशपार्षतेनेतितृप्तिविशेषः। सर्वपृषतानान्तूपरत्वेसति अनन्ता-

तृप्तिरिति । अनन्ताखड्गमांसेन लोहछागाच्चतूपरादिति वच-
चनादेवंविषयविभागा हरिणमेषवाराहमहिषशशानाम् ष्टपतत्वा-
संभवात् एवङ्कल्पनागौरवमप्यविरुद्धं । प्रमाणकल्पनेदोषाभावात्
तथाचाङ्गिराः । प्रमाणानिप्रमाणस्थैः परिकल्प्यानियत्नतः सीद-
न्तिहिप्रमाणानि प्रमाणैरव्यवस्थितैः भङ्गेपि । प्रमाणवत्कि-
ल्प्यानि सामान्यानिबहून्यपि अदृष्टशतभागोपि नकल्प्योनिः-
प्रमाणकइति ॥

## सू० सम्वत्सरन्तुगव्येनपयसा ॥ १७ ॥

गव्यग्रहणमितरव्युदासार्थं । तुशब्दोविशेषः इतरपयोनिषेधे
प्यारण्यमहिषीक्षीरंप्रशस्तमिति विशेषेत्यर्थः । तथाचब्रह्मपुराणम्
आरण्यमहिषीक्षीरं शर्कराशुंठिसंयुतं । मधुयुक्तन्तुहितं दद्या-
दमृतमेवच तदिति निषिद्धमाहयाज्ञवल्क्यः । सन्धिन्यनिर्दशाव-
त्सागोपयः परिवर्जयेत् । औष्ट्रमैकशफंस्त्रैणमारण्यक मथाविकं
सन्धिनीवृषाक्रान्ताकामुकी अनिर्दशाऽनतिक्रान्तदशाहा अव-
त्सावत्सरहितान्यवत्साच । स्त्रैणंस्त्रीभवं हिस्तन्युपलक्षणमेतत् यच्च
सर्वासांद्विस्तनीनां क्षीरमभोज्यमजावर्जमिति शंखेनाजाक्षीरस्य
भक्ष्यत्वमुक्तम् तच्छाद्धेतरविषयं । कृष्णाजाऽज्यतसीतैलं पयश्चा-
जाविकादिकम् । महिषञ्चामरक्षीरं जलमल्पजलाशयादिति ।
स्कन्दसंवादोक्तत्वात् वर्ज्यमितिशेषः । महिषंग्राम्यं आरण्या-
नाञ्चसर्वेषां मृगाणांमहिषींविनेतिमनूक्तेः । गौतमोपि यमसूःस्य-
न्दिनीनाञ्चेति पयोवर्जमितिशेषः । यमसूर्युग्मप्रसूः स्यन्दिनीस्र-
वत्य यस्यक्षीरमपेयं विवत्साया अन्यवत्सायाश्चेति बौधायनः ॥

## सू० पायसेनवा ॥ १८ ॥

पयसाश्रृतंपायसं पयोविकारश्च तेनवासंवत्सरंतृप्तिरित्यर्थः ।

तथाचविष्णु: संवत्सरन्तुपयसा तद्विकारेणवेति। अपिचमार्कण्डेय: संवत्सरन्तथागव्यम् पय:पायसमेवचेति। आदित्यपुराणे विविधं-पायसन्दद्यादिति तथामांसविकाराश्च दधिक्षीरगुडस्येतिवचनात् पयोविकारा: कूर्च्चिकाक्षीरवटकादय: ॥

## मू॰ वार्ध्रीनसमाꣳसेनद्वादशवर्षाणि ॥ १६ ॥

तृप्तिरितिशेष: वार्ध्रीनसस्त्रिविध: तथाचविष्णुधर्म्मोत्तरे। त्रिपिबन्त्विन्द्रियक्षीणम् यूथस्याग्रहणन्तथा। रक्तवर्णन्तुराजेन्द्र छागम्वाद्दर्ध्रीनसंविदुरिति मुखकर्णौजलपानेपतन्तौ जलन्त्रिपिब-इत्यर्थ:। त्रिपिबन्त्विन्द्रयक्षीणम् श्वेतंवृद्धमजापतिम्। वार्ध्रीनसन्तुतंप्राहु र्याज्ञिका:पितृकर्मणीत्यन्यत्र निगमोपि। कृष्णग्रीवो रक्तशिरा: श्वेतपक्षोविहंगम: सवैवार्ध्रीनस:प्रोक्त इत्येषानैगमीश्रु-तिरिति। अत्रानूचाना:प्रमाणं रक्तवर्णोवार्ध्रीनसो ऽक्षयतृप्ति विषयोवेत्यविरोध: वार्ध्रीनसंमहाशल्कं लोहाजञ्चपरीक्षितं। आ-नन्त्यायभवेदत्रइति वचनात्। लोहामिषञ्कालशाकं मांसंवार्ध्री-नसस्यचेति याज्ञवल्क्यवचनाच्च। वार्ध्रीनशब्देनत्वोच्चारणमना लोचितं। उष्ट्रोघृणीवान्वार्ध्रीनसस्तेमत्या अरण्यायसृमरोरुरूरौद्र: इतिश्रुतेस्तवर्गीयपाठात्। श्राद्धशिष्टस्यामांसस्यावश्य भक्षणन्त्वम-वगन्तव्यम्।तथाचविश्वामित्र: धर्म्मशास्त्रात्तुविज्ञाय भक्ष्यञ्चाभक्ष्य-मेववा प्रदायपितृदेवेभ्यो भुञ्जीताततिथिपूर्वकमिति। अत्रागमाप्ते भोजनेभुञ्जीतेतिनियमार्थं। तथाचोपमन्यु: स्वगजाविचभक्ष्याणां मांसंशाकादिमेध्यवदिति। पवित्रताभिधानादिति ॥

इति श्रीश्राद्धकाशिकायां सूत्रवृत्तौ तृप्तिकरणंसामान्यं समाप्तमिति॥

सप्तमीकण्डिकाचसमाप्ता॥

इत्थं ग्राम्यारण्यौषधिमूलफलै रनेकमत्स्यमांसैश्च तृप्तिमभिधाया-ऽधुनाक्षय्यतृप्तिंविवक्षु:सूत्रमारभते।

सू० अथाक्षय्यतृप्ति:॥ १॥

अथशब्द:प्रश्ने कार्त्स्न्ये वा अक्षय्यातृप्ति:कथङ्किं वाक्षय्यतृप्ति-कारन्द्रव्यमिति प्रश्नमित्यर्थ: कार्त्स्न्ये नाक्षय्यतृप्तिरुच्यतइतिवार्थ:। अक्षय्योनन्तता तथाचमनु: कालशाकम्मह।शल्का:खड्गोलोहा-मिषंमधु। आनंत्यायैवकल्प्यन्ते मुन्यन्नानिचसर्वशइति। प्रश्नोत्त-रमाह।

सू० खड्गमांसंकालशाकंलो हच्छाग-म्मांसं॥ २॥

खड्गस्तु पर:खड्गमृगस्तन्मांसंनिषिद्धगण्डादिव्यतिरिक्तम्। तथाचविष्णु: कालशाकंमहाशल्कोमांसंवार्ध्रीनसस्यच विषाण-वर्जायेखड्गानासूयतांस्तुभक्षाइहइति यत्तुखड्गमांसेनत्रयोदशमा-सानितिपैठीनसिनोक्तन्तत्सशृंगविषयम् लोह:सर्वलोहितच्छाग: तथाचपैठीनसि: सर्वलोहच्छागेनानंत्यमिति लोहितशब्दोत्रावयव-वृत्ति: एवमादिद्रव्यमक्षय्यतृप्तिकरमिति पूर्वप्रश्नस्योत्तरमित्यर्थ:। खड्गलोहितयोर्मध्येकालशाकोक्तिस्तत्तुल्यफलार्थ:।

सू० मधुमहाशल्क:॥ ३॥

मधुमाक्षिक: महाशल्कोमत्स्यभेद: महसेनइतिमध्यदेशेप्रसिद्ध: महाशल्कामहाकालिनोमत्स्याइतियमस्मृति:इहन्निवलइतिय-स्यरूढिरितिहलायुध:टेकायोदौप्रसिद्धइतिकल्पतरु:कंवलाख्य इ-तिकश्चित् शल्कोवेत्यन्ये एवमनेकविप्रतिपत्तौपुलस्त्योक्त एवाद-

र्त्तव्यः एकाशत्कोर्द्धचन्द्रश्चललाटेखड्गसंयुतःशुक्लवर्णस्तुमत्स्योहिमशाशलकःसउच्यते इति अत्रैकआहुः। कलौश्राद्धेमधुनिषिद्धमिति। तथाचश्राद्धेमांसन्तथामध्वितिलिखितमाह। तन्नविचारसहम् निबन्धकर्त्तृर्निर्मूलप्रतिपादनादित्युक्तम्। कलौविधायकवचनोपलब्धेश्च तथाचपैठीनसिः परमान्नंकालशाकम्मधुमांसंघृतम्पयः मुन्यन्नानितिलाविप्राःप्रकृत्याहविरष्टधा। शस्तान्यष्टौतुसर्वेषुयुगेषुमुनिसत्तमाः पितॄणांदेवतानाञ्चदुर्लभानिकलौयुगइति। परमान्नम्पायसम्। देवलोपि दर्भास्तिलागजच्छायादौहित्रंमधुसर्पिषी कुतपोनीलकण्ठश्चपवित्राणीहपैतृके इहकलौ तथा तुलसीमधुदर्भाश्चतिलाःसर्पिर्मृगामिषं एतन्मेध्यतमन्नित्यंसदाचाराश्चयेद्विजाइति सुमेधाअपि विमांसंविमधुश्राद्धम्विष्टतम्प्रीति भोजनम् विनासमलरङ्कामोव्योमालिङ्गनवच्चयमिति॥

## मू॰ वर्षासुमघाश्राद्धम्॥ ४॥

वर्षातोमघानक्षत्रे श्राद्धमक्षय्यतृप्तिकृदितिअर्थः एतच्चापिण्डकं जेष्ठपुत्रिणाकर्त्तव्यं तथाचदेवीपुराणम् तत्रापिमहतीपूजाकर्त्तव्यापितृदैवते ऋक्षेपिण्डप्रदानन्तुज्येष्टपुत्रीविवर्जयेदिति तथामघायांपिण्डदानेनज्येष्टःपुत्रोविनश्यतीति अत्रैकआहुः ज्येष्ठःआद्यगर्भोद्भवइति। तदयुक्तम्। तद्व्यतिरिक्तस्यापिज्येष्ठत्वात् तथाचशातातपः अनाद्यपुत्रोजेष्ठोपिभ्रातापुत्रोनिगद्यतइति अतश्चजेष्ठपुत्ररहितेनमघायांसपिण्डमेवकर्त्तव्यमितिगम्यते महाफलत्वात् एतच्चमघान्वितदिनान्तरेनत्रयोदश्यांमघायांपिण्डदानेनज्येष्टपुत्रोविनश्यति कनीयांस्तुत्रयोदश्यांचयाह्राभ्युदयाहृते ऋतुरभययोगोपुत्रिमावस्यपिण्डनिषेधात् अत्रवाविभक्तभ्रातॄणांपौत्र

स्यचपुत्राभावे महाफलत्वात्पृथग्पृथगधिकारः। तथाचपैठीनसिः अत्रापिपितृगीतागाथा छागेनसर्वलोहेनवर्षासुच मघासुच पुत्रो-वायद्दिवापौत्रोयोनोददद्यात्त्रयोदशीमिति तथात्रिभक्तावाविभक्ता-वाकुर्युःश्राद्धमदैवतम्। मघासुचततोन्यत्रनाधिकारः पृथग्विना अदैवतत्त्वथाहैकोद्दिष्टं पृथपद्मुभयत्रान्वैविभक्ताअविभक्तावादैवंम-घासुचश्राद्धंपृथक्कुर्युः ततोन्यत्रपृथग्विनानधिकारइत्यन्वयः अथ-वाततइतिसार्वविभक्तिस्तसिः। ततोविनादैवतंमघाश्राद्धञ्चविना-न्यत्रपृथङ्नाधिकारइत्यन्वयः उभयान्वयेपित्वयाहमघाश्राद्धयोरे-वविभक्ताविभक्तयोः पृथक्पृथगधिकारोन्यत्रनकिंत्वविभक्तैर्नैवैकश्रा-द्धंकर्त्तव्यन्नपृथगित्यर्थः। तथाचप्रचेताः अर्वाक्संवत्सरात्सर्वैकुर्युः श्राद्धंसमेत्यवै। संवत्सरेव्यतीतेतुकुर्युःश्राद्धं पृथक्पृथक्। पठन्ति-च। एकादश्यामघामशोजेत्रष्टस्य विधिवत्क्रियां। कुर्युर्नैकैकशः श्राद्धमाब्दिकन्तुपृथक्पृथगिति किञ्च नवश्राद्धंसपिण्डत्वंश्राद्धा-न्यपिचषोडश। एकेनैवतुकार्याणिसविभक्तधनेष्वपि। अपिश-ब्दादविभक्तेष्वितिपरिगणनात् यत्तु विभक्तास्तुपृथक्कुर्युःप्रतिसंव-त्सरादिकम् एकेनैवाविभक्तेषुक्रतेसर्वेषुतत्कृतम् यच्चभ्रातृणाम-विभक्तानामेकोधर्मःप्रवर्त्तते विभागेसतिधर्मोपिभवेत्तेषांपृथक्पृ-थगितिवचनादविभक्तामध्यदेशादावेकमेव कुर्वन्तितदशक्तविषय-मित्यविरोधः। वर्षास्वितिचन्द्रमासाभिप्रायं ननुवर्षास्वित्यभिधा-नान्मासद्वयात्मकस्यर्त्तेरेकमासेमघाश्राद्धमितिसन्देहः। मैवं। अपरपक्षेश्राद्धमितुप्रक्रमादिव्यदोषः अतश्चापरपक्षमघायामिति तथाचवृद्धयाज्ञवल्क्यः। याम्यंत्रापैतृकंत्रापिपितृपक्षेविशेषतः तत्र सङ्कल्पनंकुर्यात्पितृणांपुष्टिदःसदेति।

## मू० हस्तिच्छायायाञ्च ॥ ५ ॥

श्राद्धमक्षय्यकृदितिशेषः । साचात्रगजस्यैवच्छायापूर्वदिशिवर्त्तते सामुख्या । तथाचविश्वामित्रः परमान्नन्तुयोदद्यात्पितृणां मधुनासह छायायान्तुगजेन्द्रस्य पूर्वस्यान्दक्षिणामुखइति परिभाषिकीतुसागजस्य छायेवच्छायायस्याः सागजच्छायाव्युत्पत्यागौणी । तथाच । नानावचनानिब्राह्मादिषु सैंहिकेयोयदासूर्यङ्ग्रसतेपर्वसन्धिषु हस्तिच्छायातुसाप्रोक्तातत्रश्राद्धं प्रकल्पयेत् । प्रचेताः हंसेहस्तस्थितेयातुमघायुक्तात्रयोदशीति तिथिर्वैश्रावणीयातुसाच्छायाकुञ्जरस्यतु तथा हंसेहस्तस्थितेयासप्रादमावास्याकरान्विता साज्ञेयाकुञ्जरच्छायाइति बौधायनीस्मृतिः वायवीये वनस्पतिगतेसोमेच्छायायांप्राङ्मुखोभवेत् गजच्छायातुसाप्रोक्तेति चकारोरक्तवाध्रीनसादिद्रव्यसमुच्चयार्थः तथाचापस्तंबः खड्गोपस्तरणेनखड्गमांसेनैवा ऽनन्तकालांशतवलेर्मत्स्यस्यमांसेनवाध्रीनसस्यचेति खड्गोपस्तरणं खड्गासनं वाध्रीनसश्छागः । तथाचमार्कण्डेयः । वाध्रीनसामिषंलोहंकालशाकन्तथामधु । अनन्तान्प्रयच्छन्तितृप्तिंगौरसुतस्तथा । अष्टवर्षाविवाहितागौरीतत्सुतो गौरः । महाभारते । वर्धमानतिलं श्राद्धमक्षयंमनुरब्रवीत् सर्वकामैः सयजतेयस्तिलैर्यजतेपितृन् नचाकामेनदातव्यंतिलश्राद्धं । कथञ्चनेति वर्द्धमानतिलन्तिलवहुलम् स्कान्दस्यादेपि कालशाकंमहाशल्कोलोहाजस्तुपरोघृतं आनंत्यायैवभवति तथापैठीनरोहिताविति घृतंवृतबहुलं घृतेनभोजयेद्विप्रां‌न्घृतस्य‌ुमौसमुत्सृजेदितिवायवीयवचनात् । भूमौसमुत्सृजेदिति । तथापावन्पूरणीयंयथाघृतस्य‌ुविप्रततीतिघृतवहुलमित्यर्थः एवमक्षय्यतृप्तिकृत्द्रव्यमुक्त्वातत्तृप्तिहेतूनपक्तिपावनानाह ॥

## मू० मन्त्राध्यायिनःपूताः ॥ ६ ॥

पङ्क्तिपावना इति शेषः । मन्त्रशब्दः संहितावचन वहुवचनमेकहिविययथापेक्षं ऋग्वेदाद्यनेकसंहितापेक्षंवा मन्त्राध्यायित्वमात्रेणैवकेवलम्पङ्क्तिपावनाएतेपूताइतिविशेषणं । तच्चौचित्यादुत्तरत्रापिसार्वत्रिकम् मनोवाक्कायकर्मभिः । शास्त्रोक्तकृत्यातिशयेननिषिद्धवर्जनेनचवाह्याभ्यन्तः शुद्धियुक्ताः पूताः इत्युच्यन्ते । अथवापूताः पञ्चविधाः । तथाचविष्णुः । तीर्थपूतोयज्ञपूतःपयःपूतः सत्पूतोमन्त्रपूतइति उच्यते ॥

## मू० शाखाध्यायी ॥ ७ ॥

पूतः पङ्क्तिपावनइतिशेषः शाखाशब्दे मन्त्रब्राह्मणात्मकवेदापेक्षः । अंगानांवक्ष्यमाणत्वात् । तथाच शङ्खः यजुषांपारगोयश्चऋचांसाम्नाञ्चपारगः अथर्वशिरसोऽध्येताब्राह्मणाः पङ्क्तिपावना इति ।

## मू० षडङ्गवित् ॥ ८ ॥

षडंगोवेदस्तमर्थतः पाठतश्चयोवेत्तिसपूतस्ताद्दृशइतिशेषः अनूचानइत्यर्थः तथाचस्कन्दसंवादे अनूचानाः श्रोत्रियाश्चब्राह्मणाः पङ्क्तिपावनाइति शिक्षाकल्पोव्याकरणन्निरुक्तंज्योतिषांगतिः छन्दोविचितिरित्येतैः षडंगोवेदउच्यते । अत्रमन्त्राध्यायिनःप्रभृत्येतावत्पर्यंतगुणाधिक्योपक्रमादुत्तरोत्तरंप्राशस्त्यंसूचितम् । अत्रकश्चिदाह षडंगानितेषामेकंवापियोवेत्तिसएवेति । तन्नोचितं । वहुव्रीह्युपलब्धेः । अनूचानोक्तिपरित्यागप्रसक्तेश्च । एवंवेदाध्ययनेन पङ्क्तिपावनत्वमुक्त्वातदसंभवेयाह ॥

